G. 2. 18. 9
B. 2. 21. 7
L. 2. 21. 7

तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः ।
पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ७
यावदेव न जानाति कश्चिदर्थमिमं नरः ।
तावदेव मया सार्धमात्मस्थं कुरु शासनम् ॥ ८
मया पार्श्वे सधनुषा तव गुप्तस्य राघव ।
कः समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ ९
निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ ।
करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ १०
भरतस्याथ पक्ष्यो वा यो वास्य हितमिच्छति ।
सर्वानेतान्वधिष्यामि मृदुर्हि परिभूयते ॥ ११

---

विग्रहम् । ॐ —$^{d}$ ) Ś1 Ñ2 V1 B D5 अकारणं; Dg3 D2.4.6.7 G1.3 M1.2.4 °णं; Cg °णाद् ( as in text ).

7 $^{a}$ ) D2.4.7 वचन ( for इदं ). —$^{c}$ ) D2.4.6.7 कः कुर्याच्छासनं वीरो. —$^{d}$ ) M3 राजधर्मम्. —For 7, Ś1 Ñ V1 B D1.4 M4 subst.; D5 subst. l. 1 only for $7^{ab}$ :

448* पुनर्बालत्व वृद्धस्य जीवितस्य विशेषतः ।
कः कुर्याद्वचनं तस्य राजधर्मार्थविद्बुधः ।

[ ( l. 1 ) Ñ2 वत्स ( sic ) बालत्व; B2 ( also as above ) बहालकत्व; B4 पुनरालत्व ( sic ). D5 पुनर्बालस्य वृद्धस्य जीवितस्य विशेषतः. —( l. 2 ) D1 M4 राज्ञो ( for तस्य ). B4 -धर्मस्य ( for -धर्मार्थ- ). Ñ2 -विदिषः. V1 राज्ञो धर्मार्थविद्बुधः ( for the post. half ). ]

8 $^{b}$ ) कश्चिद्. D1 नृपः; D7 जनः ( for नरः ). —$^{d}$ ) Ñ B2 काकुत्स्थ ( for आत्मस्थं ). D1 M4 शासनं कुरु ( by transp. ). ॐ Ck : आत्मसंस्थं कुरु त्वदाज्ञामेव राज्ये प्रवर्तय । ॐ —After 8, D5 ins. 449*.

9 $^{a}$ ) Dg1 पार्श्वेन; T1 पा∘स ( damaged ); G1 पार्श्वेषु ( for पार्श्वे स- ). —$^{b}$ ) D2.4.6.7 transp. तव and गुप्तस्य. —$^{c}$ ) D2.4.6.7 युक्तं द्रष्टुं; T1.2 M3 [ ऽ ]प्रियं°; Cr.m.g.k as in text ( for ऽधिकं कर्तुं ). —$^{d}$ ) D4 [ त ]व ( for [ इ ]व ). —For 9, Ś1 Ñ V1 B D1.4 M4 subst.; while D5 ins. after 8 :

449* भृत्ये ते मयि पार्श्वस्थे राज्यावाप्त्यर्थमुद्यते ।
यौवराज्याभिषेकस्य विघातं कः करिष्यति ।

[ ( l. 1 ) Ñ2 मयि न; V1 हि मयि; B1 तु मयि ( for ते मयि ). Ś1 D5 राज्यकार्यार्थम्; B1 राज्यमात्मार्थम्; D1 राघवो वार्थम्; D5 मयि राज्यार्थम् ( for राज्यावाप्त्यर्थम् ). —( l. 2 ) B4 यौवराज्ये. D1.4 M4 -[ अ ]भिषेकविघ्नम्. B1 कं ( sic ). ]

10 $^{a}$ ) T1.2 G3 कृत्स्नाम् ( for सर्वाम् ). —$^{b}$ ) D2.4.6.7 G2.3 M3 पुरुषर्षभ. —$^{d}$ ) T2 तिष्ठति ( for स्थास्यति ). D2.4.6.7 विग्रहे. —For 10, Ś1 Ñ V1 B D1.4 M4 subst. :

450* निर्मनुष्यामयोध्यां हि कुर्यां राम शितैः शरैः ।

[ D1 तु ( for हि ). B2 कुर्याद्रामः. Ś1 शरैः. B1 om. शरैः. ]

11 $^{a}$ ) G3 भरतस्यापि. Dg1 T2.3 G1.2 M3 पक्षो वा; D2.4.6.7 वा पक्षे; Cm.g.t as in text ( for पक्ष्यो वा ). —$^{b}$ ) Dg1 [ अ ]थ; M3 [ अ ]पि; Cm.t as in text ( for [ अ ]स्य ). D5 हंतुम्; G2.3 [ अ ]हितम् ( for हितम् ). —$^{c}$ ) Dt1 Dd1 Dm1 सर्वांस्तांश्च; D5 सर्वमेव; D2.6 सर्वमथ; D7 सर्वं स० ( for सर्वानेतान् ). D2.4.6.7 G5 हनिष्यामि. —$^{d}$ ) T2 वा ( for हि ). T2 परिभू∘ते ( moth-eaten ). —For 11, Ś1 Ñ V1 B D5 M4 subst. :

451* यौवराज्यविघातं ते कः कुर्वीत नृपाज्ञया ।
भरतस्यापि वा पक्षं यो गृह्णीयादचेतनः ।
तं नायमहमद्यैव प्रेषयिष्यामि यमक्षयम् ।

[ ( l. 1 ) Ś1 Ñ2 D5 यौवराज्ये. Ñ1 -[ अ ]भिघातं; V1 -[ अ ]भिघातं. Ś1 D5 कः ( for कः ). M4 यौवराज्याभिषेकस्य न कुर्वीत नृपाज्ञया. —( l. 2 ) V1 भरतस्य च. Ñ2 B2 वाक्ये; B4 पक्षे ( for पक्षं ). —( l. 3 ) Post. half hypm. D1 प्रेषयेत; M4 प्रेषयिष्ये. D5 यमालयं. ]

and then cont.; while D1.4( l. 1–2 only ) ins. after 11 :

452* नायमद्य क्षमाकालस्तेजो दर्शय राघव ।
क्षमी लोकस्तो राम लोकेन परिभूयते ।
कैकेय्या नियतं राजा भेदितोऽद्य भविष्यति ।
त्वया तस्य विभिन्नस्य श्रोतव्यं न कथंचन ।
कं हि धर्मं समाश्रित्य त्वामसौ त्यक्तुमिच्छति ।    [ 5 ]

[ Ñ1 om. l. 1 —( l. 1 ) Ś1 D5 नायमस्मिन्क्षमाकालस्ते ( for the prior half. ). —( l. 2 ) V1 क्षमालोकस्तो ( sic ); M4 after corr. inf. lin. scr. m. as above. D1.4 M4 धी( D4 धी )र ( for राम ). B2 ( m. also ) च क्षमीकस्तो राम ( for the prior half ). Ñ2 B2 लोके च; B1 लोकेऽपि; B2 ( m. also ) लोके स. D5 लोको लोकस्तो हि ( for the post. half ). —After l. 2, D5 ins. 454*. —( l. 3 ) D5 कैकेय्या. V1 नियुते ( sic ) ( for नियतं ); M4 मंत्रं ध्रुवं ( for भविष्यति ). —( l. 4 ) D1 M4 transp. त्वया and तस्य. D1 M4 न श्रोतव्यं ( by transp. ). B4 कथाचन. —( l. 5 ) Ś1 D5 च ( for हि ). B2 ( also as above ) किं धर्मं समाश्रित्य; D1 M4 नाहं हि( D1 कि ) स( M4 कि )मुद्दिश्य ( for the prior half ). B2 ( also ) त्वा तस्य ( for त्वामसौ ). Ñ2 B2 D1 अर्हति( D1 °ति [ sic ] ) ( for इच्छति ). ]

—D1 M4 cont. ( further ) :

453* त्वां त्यक्त्वा भरतं चापि कर्तुं राजानमिच्छति ।

—After 11, Dg1 Dt1 Dd1 Dm1 D2.4.6( after l. 2 of 452* ).7 T G M1–3 ins. :

454* प्रोत्साहितोऽयं कैकेय्या संतुष्टो यदि नः पिता ।
अमित्रभूतो निःसङ्गं वध्यतां वध्यतामपि ।
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।

त्वया चैव मया चैव कृत्वा वैरमनुत्तमम् ।
कास्य शक्तिः श्रियं दातुं भरतायारिशासन ॥ १२
अनुरक्तोऽस्मि भावेन भ्रातरं देवि तत्त्वतः ।
सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १३
दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति ।
प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥ १४
हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः ।
देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १५
एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः ।
उवाच रामं कौसल्या रुदन्ती शोकलालसा ॥ १६
भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया ।
यदत्रानन्तरं तत्त्वं कुरुष्व यदि रोचते ॥ १७
न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् ।
विहाय शोकसंतप्तां गन्तुमर्हसि मामितः ॥ १८

G. 2. 18. 23
B. 2. 21. 22
L. 2. 21. 21

---

उत्पन्नं प्रतिपक्षस्य कार्यं भवति शासनम् ।
चक्रमेव किमाश्रित्य हेतुं वा पुरुषोत्तम । [5]
दातुमिच्छति कैकेय्यै राज्यं स्थितमिदं त्वया ।

[ (l. 1) M2 शासितम्. D2 [ऽ]नि; D4.6.7 हि; M2 तु (for श्च). Dd1 Dm1 D4.6.7 M1.2 च (D4.6 तं) द्रुष्टे; T G1.3 स्तु (T1.3 °तु)ष्टे; G2 न तुष्टे; M3 तन्निष्ठे; Ct संतुष्टे (as above). —(l. 2) G2 -मुखे (for -मुखे). Dg1 reads from संग up to मति in marg. Dg1 निःसंके; D4.7 निःसंग. Dg1 T G M1.2 कथ्यतां कथ्यताम् (by transp.). M3 (after corr. sec. m. as above) इति (for अपि). D2.4.6.7 कार्यमात्मन् (D4.7 °त्मन; D6 °त्मन )ते च (D4.6 न )ता (for the post. half). —D2.4.6.7 om. l. 3 and 4. —(l. 4) Dm1 (before corr. as above) M3 उत्पन्न-; Cm.g °न्नं (as above). —(l. 5) M2 चक्रमेव (sic). D3 हेतुं; D6 दातुं (for हेतुं). —(l. 6) Dg1 T3 G1.2 राज्य स्थीतम्; Dt1 Ct स्थितम्; G2 राज्य° (for राज्यं स्थितम्). Dd1 Dm1 राज्यमेतदुपस्थितं (for the post. half). D2.4.6.7 प्रयच्छेद्भरतायैतं राज्यं निष्कण्टकं.]

12 ab) D2 साग्रमयं; D3 सार्धं मया (for चैव मया). Ś1 Ñ V1 B D1.6 M4 विग्रहोऽयं कृतोऽनेन (V1 °कृतेन) त्वया सह मयैव (Ñ2 B2 °यापि) च. —c) Ś1 Ñ1 V1 B4 D2.4-7 (D3 after corr. as in text) कस्य (for कास्य). D2.4.5.7 मही (for श्रियं). Dg1 को हि शक्तः श्रियं दातुं. —d) Ś1 Ñ B D1.6 M4 बलाद्विषः; V1 om.; Dg1 [अ]रिसूदनः; T2 [अ]रिनाशन (sic); M1.2 [अ]रिनाशन. D2.4.5.7 भ्रातर्द्वे (D3 [before corr.] °र्द्वे )षेण राघव.

13 a) Dm1 देवि; M1 देव (for देवि). —c) Dm1 [ए]तद् (for [ए]च). —d) D4.7 दत्तेष्टेन च. —For 13, Ś1 Ñ V1 B D1.6 M4 subst. and read after 456*:

455* सर्वभावानुरक्तोऽस्मि रामं भ्रातरमग्रजम् ।
आयुधं तेन सत्येन पादौ चैवालभे तव ।

[ (l. 1) D1.6 राम. —(l. 2) Ś1 D6 त्वामवृचेन; V1 आयुधेन (for आयुधं तेन). D1 M4 [आ]लभामि ते.]

14 b) D2.6 प्रविशति. —d) T1.2 G2 M1 उपधारय (M1 °वक्ष्ये also in marg.); G2 अभिधारय. D2.4.6.7 पूर्वमेवो (D3 °वा)पधारय. —For 14, Ś1 Ñ V1 B D1.6 M4 subst. and read before 455*:

456* प्रविवक्षति रामोऽयं यदि दीप्तं हुताशनम् ।
पूर्वमेव ततो देवि प्रविष्टं विद्धि मामपि ।

[ (l. 1) V1 रामः प्रवेक्ष्यति; D1 प्रविचक्षति (sic). —(l. 2) B1 इति (for अपि). Ś1 D6 त्वमारय (for विद्धि मामपि).]

15 a) D2.4.6.7 दुःखं वीर्यात् (by transp.; D2.4 °र्यां [sic]). —c) Dg1 Dt1 D2.4.5.7 M3 देवि. D2.4.6.7 पश्यामः; M3 पश्यति. —For 15, Ś1 Ñ V1 B D1.6 M4 subst.:

457* अद्य पश्यन्तु मे वीर्यं सर्वतो युधि मानवाः ।
रामाज्ञया दुःखशल्यमद्यमयोद्धरामि ते ।

[ (l. 1) D1 सर्वतो (for सर्वतो.). D1 M4 युधि (for युधि). —(l. 2) Ś1 B4 D1.6 अहम्; B1 (inf. lin.; also as above).2 (also) इमम् (for अयम्).]

—After 15, Dt1 Dd1 Dm1 T3 G M1.2 Ck ins.:

458* हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम् ।
कृपणं चास्थिरं बालं वृद्धभावेन गर्हितम् ।

[ (l. 1) G2 वृद्धा (sic). G2 -[आ]सक्तचित्ते (for -[आ]सक्तमानसम्). G1 M2 कैकेय्या वशमागतं (for the post. half). —(l. 2) Dt1 Dd1 च स्थिरं (for चास्थिरं). Dt1 Dd1 Dm1 बाल्ये. Dm1 मोहितं (for गर्हितम्).]

16 a) Ś1 Ñ V1 B D1.6 M4 इत्येतद्; D3 एतत्तु-; D4 एवं तु (for एतत्तु). —T2 om. (hapl.) from श्रुत्वा in 16a up to वचः in 18a. —d) Dg1 Dt1 Dd1 Dm1 D4.5 M2 रुदती. D2.4.6.7 -विह्वला (for -लालसा). Ś1 Ñ V1 B D1.6 M4 दुःखशोकपरिप्लुता.

17 T2 om. 17 (cf. v.l. 16). —a) Ś1 Ñ V1 B D1.6 M4 वचनं रामः M2 वचनं पुत्र (for वदतः पुत्र). —b) D2.4.5.7 वचः श्रुतं (D4.7 श्रुत्वं) (for श्रुतं त्वया). Ś1 Ñ V1 B D1.6 M4 श्रुतं भक्तिमतो (Ś1 D6 °युतं) हितं. —c) D6 तद् (for यद्). D2.4.5.7 G2.3 M1 Ck कार्यम्; Cv.m as in text (for तत्त्वं). Ś1 Ñ V1 B D1.6 M4 एतदेव विमृश्यता (D1 °ता)शु. —d) Ś1 Ñ V1 B D1.6 M4 क्रियतां (M4 °ते); D2.4.5.7 आतिष्ठ (for कुरुष्व).

18 T2 om. up to वचः in a (cf. v.l. 16). —a) Dm1 न चाधर्म्य-; D2.4.5.7 अधर्मिष्ठं (D2 °ष्ठं [sic]) (for न चाधर्म्यं). —b) D2 मास (sic) (for मम). —c) D2 शोक-

G. 2. 18. 25
B. 2. 21. 23
L. 2. 21. 28

धर्मज्ञ यदि धर्मिष्ठो धर्मं चरितुमिच्छसि ।
शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमम् ॥ १९
शुश्रूषुर्जननीं पुत्र स्वगृहे नियतो वसन् ।
परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥ २०
यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम् ।
त्वां नाहमनुजानामि न गन्तव्यमितो वनम् ॥ २१

त्वद्वियोगान्न मे कार्यं जीवितेन सुखेन वा ।
त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २२
यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम् ।
अहं प्रायमिहासिष्ये न हि शक्ष्यामि जीवितुम् ॥ २३
ततस्त्वं प्राप्स्यसे पुत्र निरयं लोकविश्रुतम् ।
ब्रह्महत्यामिवाधर्मात्समुद्रः सरितां पतिः ॥ २४

(for शोक॰). —$^d$) D2.4.5 T2 G2 M1.2 मा( D4.5 मां D5 M3 मां ) वनं गन्तुमर्ह( D5 °मिच्छ )सि. ※ G1 : मां विहाय वनं गन्तुं नार्हसि । ※ —For 18, S1 Ñ V1 B D1.4 M3 subst.; D2 ins. only l. 2 after 18 :

459* न मे मयान्या वचनाद्धनं गन्तुमितोऽर्हसि ।
लोकपावकमंतमां मां विमुच्याविर्भण ।

[ (l. 1) Ñ2 B1.3 D5 नार्हसि; V1 नार्हसि. —(l. 2) B1 लोके. Ñ2 °पावक-. B1.3.4 D1 M3 त्यक्त्वा; D1 त्यक्त्वा (sic) (for विमुच्य). S1 D5 ( न )रिपर्वण; B1 विवर्ण. ]

19 D4 repeats 19$^{ab}$ after 460*. —$^a$) S1 Ñ V1 B D5 धर्मं च; D7 सर्वज्ञ: M3 धर्मज्ञे. K and B (eds.) इति (for यदि). S1 D5 धर्मात्मन् : Ñ V1 B धर्मज्ञ( Ñ2 °ज्ञ: ): Dg1 Dt1 Dd1 Dm1 D2.4.5 (second time).7 T2 G1.2 M1-3 धर्मिष्ठ: D1.4 (first time) M3 धर्मं( D5 °र्मे ) त्वं( D1 त्वां ); Cm as in text (for धर्मिष्ठो). —$^b$) G2 damaged for मिच्छसि. S1 Ñ V1 B D1.4 (first time).6 M3 तौ( S1 D5 M3 तु )राम( D5 °मा )मनुवर्तेते( D5 °ते ). —D1 M3 (hapl.) om. 19$^{cd}$. —$^c$) S1 D5 शुश्रूषु: Ñ V1 B (B1 m. also) D2.4.7 शुश्रूषन् ; D6 शुश्रूषु (sic). S1 B2 (also) D5 च (for त्वं). —$^d$) Ñ1 धर्म॰र: Dg1 चरधर्मम् (for चर धर्मम्). V1 अनुत्त म्. —After 19, S1 Ñ V1 B D5 ins.; while D1.3 M3 ins. after 19$^{ab}$ (D1 M3 owing to om.):

460* ततो ममापि वचनं धर्म्यं कर्तुमिहार्हसि ।
पुरा मातुर्नियोगाद्धि शक्रः परपुरंजयः ।
भ्रातृन्नवान स्वापत्याजाज्ञनं चाप दिवौकसाम् ।

[ S1 Ñ V1 B D5 om. l. 1. —(l. 1) D5 धर्मं कर्तुमितोऽर्हसि (for the post. half). —(l. 2) B1 तु (for हि). D1.3 M3 मातुनि( M3 °नि )योगाद्धि पुरा (for the prior half). —(l. 3) S1 D5 स्वापत्यात् ; Ñ2 B1-3 D1.5 स्वापत्यान्. B4 त्वा (sic) (for राज्यं). Ñ V1 B2 D1.3 चापि; M3 प्राप्तो (for चाप). ]

—Thereafter D5 repeats 19$^{ab}$.

20 $^a$) Ñ V1 B1-3 D2.3 शुश्रूषन् ; B4 D4.7 G2 शुश्रूष. S1 D5 M2 (before corr.) तत्र; Dd1 Dm1 D5 पुत्र: (for पुत्र). —$^b$) D2.5.7 तिर( D5 °च )तोऽपि सन् (for नियतो वसन्). —$^d$) B1.2 Dt1 D2.4.5.7 कश्यपस्. —For 20, D1 M3 subst.:

461* तथैव का( D1 क )श्यपेनापि मातुः कृत्वा प्रियं वचः ।
यशो लोके महत्प्राप्तं स्वर्गलोकश्च शाश्वतः ।

21 B2 reads 21$^{ab}$ in marg. —$^a$) D5 यथैवं. B1 D2 राज्य- (for राजा). G2 पूज्यम् (sic). —$^b$) Dg1 G2 ( अ )पि; T1.2 ( अ )पिच (for हि). S1 Ñ V1 B D2.4-7 तथाहमपि पुत्रक: D1 M3 तथैवाहम( M3 °हं न )संशय:. —$^c$) Dg1 त्वामहम् ; D2.4.5 अहं त्वाम् ; T2 त्वां नाहम् (for त्वां नाहम्). S1 D5 त्वया ममापि वचनात् ; Ñ V1 B D1 M3 म( D1 न )माप्यनत्वं( B1 °मीत्य ) वचनात्( B1 °नं ).

22 G1 om. 22-23$^{ab}$. —$^{ab}$) D5 च (for वा). S1 Ñ V1 B D1.3 M3 न चैव त्व( B1 त )द्विहीनाहं जीवेयमिति मे मति:( Ñ1 damaged for मति: ). —After 22$^{ab}$, S1 Ñ V1 B D1.3 M3 ins.:

462* मामुपेक्ष्य च राम त्वं न वनं गन्तुमर्हसि ।
गन्तव्यं यदि चावश्यं मयैव सहितो व्रज ।

[ (l. 1) D5 मपेक्ष्य. Ñ B2 ममाप्यपेक्ष्या राम; V1 B1.3.4 D1 M3 मयपेक्ष्यापि( M3 °पि ) राम मे (hypm.) (for the prior half). V1 वनं गन्तुं न चार्हसि (for the post. half). —(l. 2) V1 B3.4 D1 M3 वा (for च). Ñ2 V1 B1 ( अ )त्वं (for ( अ )वश्यं). ]

—$^c$) Ñ V1 B2-4 D1 M3 हि मे सह: B1 हि सह मम (for सह मम).

23 G1 om. 23$^{ab}$ (cf. v. l. 22). —$^{ab}$) D2.4.5 यदि यास्यत्व( D5 °सर (hypm.) )मथ त्वं (for $^a$). D4.7 transp. त्यक्त्वा and मां. M3 om. मां (subm.). S1 Ñ V1 B D1.3 M3 यदि वा मां( S1 D5 मां सं: M3 त्वं मां )परित्यज्य वनं यास्यसि राघव. —D2 om. (hapl.? cf. 23$^{cd}$ in D4) 23$^{cd}$. —$^c$) Dg1 Dt1 Dm1 T2 ( आ )सिष्ये. S1 Ñ V1 B D1.4 M3 ततोऽहं प्रायमासि( S1 V1 D5 M3 °सि )ष्ये: D2.4.7 तत: प्रायमु( D4 °उ )पासि( D5 °सि )ष्ये: M3 तदाहं प्रायमासिष्ये. —$^d$) Dt1 Dd1 Dm1 च; M3 ( अ )हं (for हि). V1 शक्नोमि: B2 (m. also) D5 शक्ष्यामि: D1 शिक्ष्यामि (both sic); T2 वक्ष्यामि.

24 $^{ab}$) D2.4.7 तत: प्राप्स्यसमसमं त्वमतुलं धर्मवत्सल. —For 24$^{ab}$, S1 Ñ V1 B D1.3.5 M3 subst.:

463* मातृहा निरयं घोरं तेनावाप्स्यसि कल्मषम् ।

[ S1 मातृहानिरयं; Ñ2 °हानिरयं; B2 °हानिरिवं. S1 त्वमेवाप्स्यसि; V1 D1.3 (after corr. as above).5 तेन वाप्स्यसि. Ñ V1 B3 किल्बिषं; D1 दारुणं; D5 कर्मणा; M3 कल्मषी (for कल्मषम्). ]

विलपन्तीं तथा दीनां कौसल्यां जननीं ततः ।
उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ २५
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥ २६
ऋषिणा च पितुर्वाक्यं कुर्वता व्रतचारिणा ।
गौर्हता जानता धर्मं कण्डुनापि विपश्चिता ॥ २७
अस्माकं च कुले पूर्वं सगरस्याज्ञया पितुः ।
खनद्भिः सागरैर्भूमिमवाप्तः सुमहान्वधः ॥ २८
जामदग्न्येन रामेण रेणुका जननी स्वयम् ।
कृत्ता परशुनारण्ये पितुर्वचनकारिणा ॥ २९

G. 2. 18. 36
B. 2. 21. 33
L. 2. 21. 35

—Ś1 D5 om. 24$^{cd}$. —$^{f}$) M2 [ अ ]धर्म्यात्. Ñ V1 B D1.2.3.6.7 M3 अ( M3 [ before corr. ] आ )ज्ञया( B4 °या )प( Ñ1 यद्यज्ञाना )मि( D1 °दि )वाक्क्ष्मात् .—After 24, D1 ( l. 1 only ).2.4.6.7 ins. :

464* गुरोरप्यधिका माता धर्मज्ञाः कथयन्ति हि ।
कुरु मे वचनं पुत्र मा पितुः परचेतसः ।

[ ( l. 1 ) D2.7 अप्यधिका. D2.7 इ ( for हि ). ]

25 $^{a}$) Dg1 तदानीं तां; D1 यथा दीनां ( for तथा दीनां ). M4 इत्येवं विलपंतीं तां. —$^{b}$) Ś1 D5 शोकमूर्छितां; Ñ V1 B दुःखमूर्छितां; D1 M4 शोककर्शितां. —$^{d}$) B3 धर्मसंहितः. —After 25, Ś1 D2.4-7 ins. :

465* किमेतद्देवि धर्मज्ञे स्नेहविक्लवया त्वया ।
भाषितं सार धर्मं त्वमात्मानं स्वकुले तथा ।
भर्तारं परमोदारं त्वतो मातः प्रशाधि माम् ।
जानतोऽपि हि मातॄणां दुःखं पुत्रप्रवासजम् ।

[ ( l. 2 ) D4( before corr. as above ) चाहि ( for सार ). —( l. 3 ) D7 ततो ( sic ) ( for ततो ). —( l. 4 ) D5 जानन्त्यपि; D4.7 जानत्यपि हि; D5 जानंतस्यपि ( sic ) ( for जानतोऽपि हि ). D2 lacuna for प्र; D4 -प्रवासनं ( for -प्रवासजम् ). ]

26 $^{a}$) Dt1 ऽस्ति; G1 काश्चि; Ct as in text ( for नास्ति ). G2 प्रियं ( for पितुर् ). —$^{b}$) Ś1 D2.4-7 प्रतिकूलयितुं. —$^{c}$) Ś1 D5 T2 M2 मा. —$^{d}$) Ñ V1 B D1 M4 गमिष्ये वचनात्पितुः. —After 26, Ś1 Ñ V1 B D5 M4 read 30$^{ab}$ ( 471* ); D1( along with 471* ).2.4.6.7 read 30 and then 29 ( cf. v.l. 29 ).

27 D5 om. ( hapl. ) 27$^{ab}$. —$^{a}$) D1.2.4.7 G2 M1 [ अ ]पि ( for च ). —$^{b}$) Dg1 Dt1 D1.2.4.7 G2 M2 वनचारिणा. —$^{cd}$) D1 कण्वेन; D4 केनापि; D5 कंडुना ( for कण्डुना ). Dg1 M2 transp. जानता and कंडुना. Dt1 Dd1 Dm1 D4( m. ) T1.3 च; D2 [ अ ]पि- ; G1 M2 हि ( for [ अ ]पि ). —For 27, Ś1 Ñ V1 B D5 M4 subst. :

466* कण्डुना चापि सिद्धेन वनाश्रमनिवासिना ।
महर्षिणा गौर्विशस्ता तथैव पितुराज्ञया ।

[ ( l. 1 ) V1 कंडुनाख्या; B3 कण्वा च; D5 क( before corr. का )ण्डुना च ( for कण्डुना च ). B1 [ अ ]पि च ( by transp. ). D5 कृद्धेन ( for सिद्धेन ). Ñ V1 B2 वनवास-; B3 वनाश्रम- ( for वनाश्रम- ). B4 -निवासिनः ( sic ). —( l. 2 ) V1 damaged: B3 ( m. also ) महर्षीणां ( for महर्षिणा ). ]

28 D5 repeats 28$^{ab}$ as in D5 after 469*. —$^{a}$) Dt1 Dd1 Dm1 D6.7 तु ( for च ). D2.4.7 कुले पूर्वैः ( for कुले पूर्वं ). —$^{b}$) D2.4.7 पितुर्वच: ( for [ आ ]ज्ञया पितुः ). —D2.4.7 om. 28$^{cd}$. —$^{c}$) M2 सागरं पूर्वम् ( for सागरैर्भूमिम् ). —$^{d}$) Dd1 Dm1 संप्राप्तः; Cm as in text ( for अवाप्तः ). —For 28, Ś1 Ñ V1 B D1.3.6 M4 subst. :

467* अस्माकं पूर्वकैश्चापि खनद्भिः पितुराज्ञया ।
भूतलं सगरपुत्रैर्महान्सत्त्ववधः कृतः ।

[ Ś1 V1 ( both hapl.; cf. 463* ) D1 om. l. 1. —( l. 1 ) Ñ1 पूर्वजैः. B3 ( also as above ) खनित्वा ( for खनद्भिः ). —( l. 2 ) Ś1 Ñ1 B1 भूतले. D1 सगरसर्भूमितलं ( hypm. ); D3 सागरात्मजैर्भूमिर्, M4 सगरस्यात्मजैर्भूमि ( for the prior half ). Ś1 B2 D6 महा- ( for महान् ). ]

—Ś1 Ñ V1 B D1.3.6 M4 cont.: D7 ins. after 28$^{ab}$ :

468* तदेतद्य मयैकेन क्रियते पितृशासनम् ।

[ D1.6 M4 तदेतं ( for तदेतद् ). D7 °देवि मा शुचः ( for the post. half ). ]

—D1.6 cont. further :

469* प्रायशश्च नृभिः सद्भिर्गतो मार्गोऽनुगम्यते ।

—Thereafter D5 repeats 28$^{ab}$ ( as in D5 ).

29 Ś1 Ñ V1 B D5 M4 transp. 29 and 30$^{ab}$ ( including 471* ); D1.2.4.6.7 transp. 29 and 30 and both the groups read them after 26. —$^{a}$) B4 जामदग्न्येन; Dt1 Dd1 T2 जामदग्नेन; D4 जामदग्नेन. D5 reads from ण up to कारिणा in $^{c}$ in marg. —$^{b}$) Ś1 Ñ V1 B D5 M4 जनन्याः किल धीमता. —$^{cd}$) Dg1 कृंता; D1.3 कृत्वा; D5 हता; Cm as in text ( for कृत्ता ). Dg1 Dt1 D6.7 G2 M1.3 -कारणात्. Ś1 Ñ V1 B D5 M4 छिन्नं शिरः परशुना कट्टस्य पितुराज्ञया. —After 29, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins. :

470* एतैरन्यैश्च बहुभिर्देवि देवसमैः कृतम् ।
पितुर्वचनमक्लीबं करिष्यामि पितुर्हितम् ।

[ ( l. 1 ) Dt1 Dm1 T2 दिवि ( for देवि ). —( l. 2 ) Dm1 °मक्लीबं. ]

G. 2. 18. 38
B. 2. 21. 35
L. 2. 21. 38

न खल्वेतन्मयैकेन क्रियते पितृशासनम् ।
पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३०
तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा ।
पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥ ३१
तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत् ।
तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् ।
अभिप्रायमविज्ञाय सत्यस्य च शमस्य च ॥ ३२

---

30 Ś1 Ñ V1 B D5 M4 transp. 29 and 30ab (including 471*); D1.2.4.5.7 29 and 30 and both the groups read them after 26.—a) M3 [इ]दं; M2 [ए]व (for [ए]तद्). Ś1 D6 [ए]तेन (for [ए]केन).—After 30ab, Ś1 Ñ V1 B D1(after 30).5.6 M4 ins.:

471* अरण्यवासः साधूनां विशेषेण प्रशस्यते ।
इदं च मे कथयतां ब्राह्मणानां परिश्रुतम् ।
पुरा कृतं पितृवचो यथान्यैरपि साधुभिः ॥

[(l. 1) B1 -वासम् (hypm.).—(l. 2) Ñ B3 मया; D1 तु° (for च मे). D6 प्रतिश्रुतः.—(l. 3) B2 reads *sup. lin.* पुरा कृतं (as above). Ś1 D6 यत्न्यैर्.]
while Dg1 Dt1 Dd1 Dm1 T G M1-3 ins.:

472* एतैरपि कृतं देवि ये मया तव कीर्तिताः ।
नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये ।

[(l. 1) Dg1 Dt1 Dd1 Dm1 M3 परिकीर्तिताः; G2.3 M1 कीर्तितास्तव (by transp.).—(l. 2) M3 धर्मामपूर्वं.]
—c) Dm1 अभिप्रेत्य. Ś1 V1 D6 प्रायशः पितृभिः सद्भिर्; Ñ B M4 प्रायशश्च(Ñ B3 °शो हि) मुनिः सद्भिर्; D1.2.4.5.7 आर्यैरपि कृ(D2 त्)तं देवि.—d) Ñ2 B3 कृतोः D2 ततो (for गतो). D5 मार्गे. B4 [s]नुमन्यते.

31 M4 om. (hapl.?) 31; D7 om. 31ab.—ab) D2.4.5 न मयैकेन (for तु मया कार्यं). D2.4.5 देवि मा शुचः (for भुवि नान्यथा). Ś1 Ñ V1 B D1.6 करिष्ये वचनं तस्मात्पितुरस्य(Ñ2 B2.4 D1 °स्य; B3 °र्थं) प्रसीद मे.—c) D4.7 सर्वं (for कुर्वन्).—d) Ś1 B1 Ck किंचित्. Ś1 Ñ V1 B D1.6 न(Ś1 तु) प्रहास्यते; G2 °s s; D2.4.5.7 विप्रमुख(D2.7 °ख्य)तेः Cm.g.t नाम हीयते (as in text).

32 a) Ñ V1 B D1 M4 इत्येवम् (for तामेवम्). Ñ V1 B D1 M4 कौस(D1 °सिः M4 °स)ल्यां; T2 ज ∽ नीं; T3 वचनं (for जननीं). Ś1 D6 इत्युक्त्वा चैव(D6 चापि)कौसल्यां.—b) Ś1 Ñ V1 B D1.6 M4 रामो लक्ष्मणम् (for लक्ष्मणं पुनर्).—After 32ab, Dg1 Dt1 Dd1 Dm1 D2.4.5.7 T G M1-3 ins.:

473* वाक्यं वाक्यविदां श्रेष्ठं श्रेष्ठः सर्वधनुष्मताम् ।

[D2.4.5.7 अर्थ- (for वाक्य-). Dt1 Dm1(before corr. as above)D2.4 T3 G1.3 M1.2 श्रेष्ठः(T3 G1 °ष्ठ [sic]) (for श्रेष्ठं). Dg1 श्रेष्ठं (for श्रेष्ठः).]
—c) Ś1 Ñ V1 B D1.6 M4 जानामि लक्ष्मणाहं ते(D1 M4 ते लक्ष्मणाहं [by transp.]).—d) Ś1 Ñ V1 B D1.6 भक्तिभावम् (for मयि स्नेहम्). M4 रामे भक्तिमनुत्तमां.—After 32cd, Ś1 Ñ V1 B D1.6 M4 ins.:

474* मदर्थमपि ते प्राणा अपि जानामि राघव ।
दुःखशल्यं त्वविज्ञानात्संघट्टयसि मे पुनः ।
तदेव तावद्दुःखं मे यदस्मो मन्यते नृपः ।
दुःखेन महताविष्टः शेते मोहमुपागतः ।
कैकेय्या स्त्रीस्वभावेन पातितो धर्मसंकटे । [5]
मूर्च्छामुपागतो राजा न संज्ञां लभते चिरात् ।
अहो कृच्छ्रमहो दुःखं यत्पापं कर्तुमिच्छसि ।
धर्मज्ञस्य पितुः को नु मादृशो राज्यलिप्सया ।
उत्क्रम्य शासनं जीवेत्सर्वलोकविगर्हितः ।
मा मुत्स कालः सौमित्रे यदहं शासनं पितुः । [10]
इच्छेयं समतिक्रम्य मुहूर्तमपि जीवितुम् ।

[(l. 1) B3 मदर्थम्. Ñ1 अत्र (corrupt) (for the first अपि). D1 च (for ते). V1 B3 (also) D1 प्राणान्; B4 प्राणाम् (sic); M4 प्राणान् (for प्राणा). D1 ज्ञात्वा; M4 त्यक्तान् (for the second अपि). B3 D1 M4 लक्ष्मण (for राघव).—(l. 2) Ś1 D6 त्वा(D6 [before corr.] °च)ज्ञानात्; M4 (after corr. *pr. m.*)त्विज्ञानात्. B4 मनः (for पुनः).—(l. 3) D1 तत् (for तद्). B3 मात (for तावद्). D1 यदानीं; M4 यदयं (for यदस्मो). Ñ1 पुनः (for नृपः).—(l. 4) D6 (before corr.) आविष्टः.—(l. 5) Ñ2 कैकेयी-. Ñ2 B3 पतितो; B1 पतिता (sic); D1 [मै]थिलो (for पातितो).—All the above MSS. (except M4)om. l. 6.—(l. 7) B4 अहो (for the first अहो). D1 दुःखं मात्कृच्छ्रं; M4 दुःखमहोकृच्छ्रं (by transp.) (for कृच्छ्रमहो दुःखं). Ś1 स्वार्थं; B3 तत्रार्थं; D6 तत्पापं. Ñ2 D1 कर्तुमिच्छसि; M4 इच्छति.—(l. 8) Ś1 V1 D6 कोथ; B1 कोस्य; B4 कोपि; D1 कोपि; M4 कातान् (for को नु). M4 धन- (for राज्य-).—After l. 8, M4 ins.:

474(A)* को नाम यत्र सौमित्रे मादृशोऽपि पितुः कृतः ।

—(l. 9) M4 -मुत्क्रम्य. M4 -विगर्हितं.—(l. 10) D1 न कालोत्र; M4 नः स कालः (for मुत्स कालः). V1 B4 D1 यदाहं; M4 यदाहं (for यदहं).—(l. 11) Ñ2 B4 इच्छेदं.]
—After 32cd, Dg1 Dt1 Dd1 Dm1 D2.4.5.7 T G M1-3 ins.:

475* विक्रमे चैव सत्त्वे च तेजश्चैव दुरासदम् ।
मम मातुर्महद्दुःखमतुलं शुभलक्षण ।

[D2.4.5.7 om. l. 1.—(l. 1) Dg1 Dt1 T G1.2 M3 सु; M2 [अ]पि (for [च]व in the post. half).—(l. 2) D2.4.5.7 सर्वे मात्रे(D4.7 °त्रे)व मे दुःखं (for the prior half). Dg1 T1.3 G2.3 M1.2 महद् (Dg1 सं) दुःखं; D2.4.5.7 मन्यसे; T2 M3 मदुःखं (for अतुलं). D5 -लक्षण.]

धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् ।
धर्मसंश्रितमेतच्च पितुर्वचनमुत्तमम् ॥ ३३

संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा ।
न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ ३४

सोऽहं न शक्ष्यामि पितुर्नियोगमतिवर्तितुम् ।
पितुर्हि वचनाद्वीर कैकेय्याहं प्रचोदितः ॥ ३५

तदेनां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् ।
धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ३६

तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः ।
उवाच भूयः कौसल्यां प्राञ्जलिः शिरसानतः ॥ ३७

अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् ।
शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ।
तीर्णप्रतिज्ञश्च वनात्पुनरेष्याम्यहं पुरीम् ॥ ३८

G. 2. 18. 33
B. 2. 21. 47
L. 2. 21. 33

—B4 om. 32ᶜ–34. —ᶜ) B1 नाभिप्रायम्. Ś1 Ñ1 B1.2 D1 नाभिज्ञाय: Dg1 Dt1 न वि°; T1 *inf. lin. pr. m.*; Cg as in text (for नावि°). —ᵈ) D2.4.5.7 मत्सत्त्व(D4 °त्व) स्व: T2 समस्य च (for मत्सत्त्व च). D6 समस्य (for वामस्य). Ś1 Ñ V1 B1–3 D1.6 M4 मैवं(D1 °च) मां (B1.2 मामेवं: M4 मा मैवं) वक्तुमर्हसि. —After 32, Ś1 Ñ V1 B1–3 D1.6 M4 ins.:

476* साधु लक्ष्मण संजाने मम चेदिच्छसि प्रियम् ।
[D1 ईक्षामि (for संज्ञाय).]

33 B4 om. 33 (cf. v.l. 32). —ᵃ) D2.4.5.7 धर्मः सत्ये प्रतिष्ठितः. —ᶜ) M4 धर्मं. Dg1 (before corr.) -संस्थितम् (for -संश्रितम्). Dt1 Dd1 Dm1 अप्येतद् (for एतच्च). D2.4.5.7 धर्मांश्रयं(D4 °श्रितं)हि मे तच्च(D4.7 चैव). —For 33, Ś1 Ñ V1 B1–3 D1.6 M4 subst.:

477* धर्मे स्थितिः परो लाभो धर्मो धार्यते धृतः ।
न च धर्मो धृतो मेऽन्यः पितुराज्ञावनादृते ।

[(l. 1) Ś1 Ñ2 V1 B3 D6 धर्मे. V1 [ऽ]पायो (for लाभो). D1 धर्मं (for धर्मो). V1 धृतः: D1 धृतः (for धृतः). —(l. 2) Ñ1 धर्मो वा धृतो (hypm.): Ñ2 धर्मोधृतः: B3 D1 M4 धर्मो(D1 °र्मं) मतो (for धर्मो धृतो). Ś1 D6 मन्ये; Ñ B1.3 (also as above) मेऽ; M4 सौम्य (for मेऽन्यः). V1 न धर्मोऽस्ति मतो मेऽन्यः (for the prior half). D1 M4 परः (for धर्मे). Ś1 D6 पितुराज्ञानुपालनात् (for the post. half).]

34 B4 om. 34 (cf. v.l. 32). —ᵃ) D1.2.4.5.7 संश्रुत्य हि: T1.2 सुसंश्रुत्य. —ᵇ) D7 G2 M1 च (for the second वा). —T2 om. 34ᶜᵈ. —ᶜ) D1.2.4.5.7 कर्तव्यं नान्यथा वीर. —ᵈ) D1 वाश्रुत्य. D1 वानता: D4.7 चेष्टता (for तिष्ठता). —For 34, Ś1 Ñ V1 B1–3 D6 M4 subst.; D1 ins. after 34:

478* करिष्यामीति संश्रुत्य तदहं पितृशासनम् ।
न कुर्यां यदि सौमित्रे सर्वथैव धिगस्तु माम् ।

[(l. 1) V1 सश्रुत्य (for संश्रुत्य). Ś1 D1.6 M4 यद् (for तद्). —(l. 2) Ñ2 सौमित्रि (sic).]

—B3 cont.:

479* जीवितुं नैव शक्ष्यामि पितुर्वाक्यबहिर्मुखः ।

35 ᵃ) Ś1 शिक्ष्यामि: N2 B3 शक्नोमि: D6 शक्ष्यामि (sic). Dt1 Dd1 Dm1 पुनर्; G2 ननुर् (for पितुर्). D2.4.5.7 पितुर्न शक्या(D5 °क्ष्या [sic])मि (by transp.). —ᵇ) Ñ V1 B2.3 नियोगाद्: B1 (after corr. as in text) B3 (before corr. as in text) नियोगात्. Ñ V1 B3 अपवर्तितुं: B1.3 D1 नानुवर्तितुं: B4 विनिवर्तितुं: D6 (before corr.) इति वर्तितुं. —ᶜ) V1 न पितुर्; T1 पितुर्वा (for पितुर्हि). Ś1 Ñ B D1.6 M4 [अ]नुमतं तन्मे (Ñ1 मन्ये: B4 मन्ये): V1 अनुमतं मे: D6 °देव (for वचनाद्वीर). —ᵈ) Ś1 Ñ V1 B D1.6 M4 समु(D1 M4 यदु)द्दाहृतं: D2.4.5.7 [अ]हं प्रणोदितः.

36 ᵃ) Ś1 Ñ B D1.6 M4 एता(M4 °ना)मुत्सृज(D1 °ज्य); V1 एतामवत्सृज (sic); Dg1 Dt1 Dd1 Dm1 D5 T1.2 G1.2 M1 एतां विसृज(D5 [before corr.] °ज्य); M2 एवं विसृज: M3 एको विसृज. —ᵇ) Ś1 Ñ V1 B D1.6 M4 -विधा(M4 -धर्मा)कुलां (for -धर्माश्रितां). D2 पतिं: D7 गतिं (for मतिम्). —ᶜᵈ) G2.3 आश्रयता तैक्ष्ण्यं. D2.4.5.7 वशगो भव: T3 (after corr. as in text) नभि° (for अनुगम्यताम्). Ś1 Ñ V1 B D1.6 धर्ममाश्रित्य स(V1 B2.4 D1.6 न)द्बुद्धिमनुवर्तितुमर्हसि: M4 धर्मोधममस्मिन्काले शाम्यतां संभ्रमस्तव.

37 ᵃ) Ñ1 इत्येवम्; M4 तदेवम्. Ś1 वचनैः D2.4.5.7 सौमित्रिः M3 धर्मात्मा (for सौहार्दाद्). Ś1 Ñ2 V1 B D1.6 M4 इत्युक्त्वा वचनं(M4 °मनुनयन्) रामो. —ᵇ) Dd1 -[अ]ग्रतः. Ś1 Ñ V1 B D1.6 लक्ष्मण लक्ष्मिवर्धनैः D2.4.5.7 लक्ष्मणं शुभलक्षणं: M4 लक्ष्मणं हेतुमद्वचः. —ᶜ) D2.4.5.7 रामः (for भूयः). D1 कौशिल्यां. —ᵈ) B4 प्रांज ०: D7 प्रावलिः (sic) (for प्राञ्जलिः). B4 शिरसा नतं.

38 ᵃ) Ś1 Ñ V1 B D1.6 M4 अनुजानीहि: D2.4.5.7 अनुजानीष्व: G2 अनुमन्य च. G1 मा (for मां). —ᵇ) Ś1 Ñ V1 B D1.6 M4 करिष्ये शासनं पितुः: Dg1 T1.2 G2 M3 गमिष्येऽहमितो वनं: D2.4.5.7 गंतुमिच्छाम्यहं वनं. —ᶜ) G1 M1.2 च (for [अ]सि). Ś1 B2 (m. also) D6 मया (for मम). —ᵈ) Ś1 Ñ V1 B D1.6 M4 पुनरागमनेन(B2 [m. also] °माय) च. —After 38ᶜᵈ, B3 ins.:

480* यदि प्रियं करोष्यद्य यास्यामि गहनं वनम् ।

—ᵉ) D6 पूर्णप्रतिज्ञश्च; M1 तीर्णप्रतिज्ञं. Ś1 Ñ V1 B D1.6

G. 2. 18. 34
B. 2. 21. 63
L. 2. 21. 54

यशो ह्यहं केवलराज्यकारणा-
न पृष्ठतः कर्तुमलं महोदयम् ।
अदीर्घकाले न तु देवि जीविते
वृणेऽवरामद्य महीमधर्मतः ॥ ३९

प्रसादयन्नरवृषभः स मातरं
पराक्रमाज्जिगमिषुरेव दण्डकान् ।
अथानुजं भृशमनुशास्य दर्शनं
चकार तां हृदि जननीं प्रदक्षिणम् ॥ ४०

इति श्रीरामायणे अयोध्याकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

M3 कुशली( D1 °ली: ) ( for च वनात् ).—$^{f}$) T3 moth-eaten for त्व. Ś1 Ñ V1 B D1.4 M3 पादौ तु( D6 ह )क्ष्यामि ते पुन:.—After 38, Ś1 Ñ V1 B D1.4 M4 ins. :

481* गच्छेयं त्वदनुज्ञातो निर्व्यलीकेन चेतसा ॥

while Dg1 Dt1 Dd1 Dm1 D4.5.7 T G M1-4 ins. :

482* ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ।

[ G3 यव ( sic ) ( for इव ). M3 यथा ( for पुनर् ). D5 यथा राज्ये प्रतापवान्; D4.5.7 यथा राजा गतो( D5 °ज्ये गतो ) वनात् ( for the post. half ). ]

—Thereafter, Dg1 Dt1 Dd1 Dm1 T G M1-4 ins. a passage given in App. I ( No. 11 ).

39 $^{a}$) C1 यशो ( as in text ). V1 न शोकतो; Dt1 यतो ह्यहं; Dm1 यशो ह्ययं; D1 M3 यशोऽद्य( M3 °द्य )यं; D4.7 य ( D7 त )था ह्यहं. Ś1 Ñ V1 B D1.4 M4 देवि न ( for केवल- ). G1 -राज्यकारणात्.—$^{b}$) D5 M3 न( D5 मे ) पृष्ठतः. Dm1 D4.7 ह्यहं ( for ह्यलं ). Ś1 Ñ V1 B D1.5.6 M4 परि( D5 ह्यहं )त्यजेयं सुहृत्नेन ते कृते.—$^{c}$) Ś1 Ñ V1 B D1.4-7 नर-लोक- ( for न तु देवि ). T3 damaged for -जीवि in -जीविते. D5 अदीर्घकालोनरलोकजीविते; M3 अदीर्घकालस्य हि जीवितस्य.—$^{d}$) Ś1 Ñ V1 B D1.5.6 वृणोमि धर्मे न( V1 * ); D4.7 वृणे च( D5 न )त्वाश्रयः M3 वृणे चराम्यद्य. D4 समर्पतः ( for अधर्मतः ). B1.4 मही न च( B1 * * )र्मतः. M4 वृणोमि धर्मादि-तरत्कथं नृपः.—After 39, Ś1 Ñ V1 B D1.2.4-7 M4 ins. :

483* प्रसादये त्वां शिरसा नतप्रते
प्रसीद मे कर्तुमविघ्नमर्हसि ।
वनं गमिष्यामि नृपाज्ञया ह्यहं
प्रदेह्यनुज्ञां शिरसा नतस्य मे ।

[ ( l. 1 ) D6 त्वा. M4 प्रसादयेय. B3 नतव्रतः; D1 ( before corr. नतस्य मे ) [ न ]त सुव्रते; D4.7 M4 नतव्रतो ( D5 M4 °तः ).—( l. 2 ) D1 प्रसीद ( metathesis ) ( for प्रसीद ). M4 इदं त्वम् ( for अविघ्नम् ).—( l. 3 ) D1 M4 वनं( D1 °ने ) गमिष्ये पितुराज्ञया ह्यहं( M4 °रेव शासनात् ); D2.4.5.7 वनं गमिष्याम्यहमाज्ञया पितुः.—( l. 4 ) M4 ततोऽभ्यनुज्ञां कुरु गच्छतामिति. ]

40 D1 M4 om. 40.—$^{a}$) Ñ1 V1 नरर्षभः ( subm. ); D2.4.5.7 नरऋषभः. Dg1 स्वमातरं.—$^{b}$) Ś1 Ñ V1 B D2.4-7 बहुयत्नात् ( for पराक्रमात् ). T3 देवि ( sic ) ( for एव ).—$^{c}$) D2 अथ ( for अथ ). Ś1 Ñ V1 B D2.4-7 [ अा ]त्मजं ( for [ अ ]नुजं ). Ś1 D6 अतिदेविनं तदा; Ñ V1 B इ( Ñ1 B3 अ )-ति( B2 °भि )वादिनं तदा; D2.4.5.7 अनुदर्शयंस्तदा; T1 अ * *° damaged ); T3 अनुशास्य दर्शनं ( sic ) ( for अनुशास्य दर्शनं ).—$^{d}$) Ś1 Ñ B D2.4-7 मा हृदि; V1 हृदये ( for तां हृदि ). Ś1 Ñ V1 B D2.4-7 जन( B1 °* )नी पुनः पुनः.

Colophon. *Sarga name*: Ś1 Ñ V1 B D2.4 कौसल्या-नुनयः; D1 रामाश्वासनो; D4.7 रामवाक्यं.—*Sarga no.* ( figures, words or both ): Ñ1 B1.4 D6 om. Ś1 Dg1 Dt1 Dd1 Dm1 D5 T G M1-3 21; Ñ2 B2.3 17; D1 74; D4.7 23; D2 26; M4 19.—After colophon, D6 G M1.2 conclude with श्रीरामाय नमः.

## १९

अथ तं व्यथया दीनं सविशेषममर्षितम् ।
श्वसन्तमिव नागेन्द्रं रोषविस्फारितेक्षणम् ॥ १
आसाद्य रामः सौमित्रिं सुहृदं भ्रातरं प्रियम् ।
उवाचेदं स धैर्येण धारयन्सत्त्वमात्मवान् ॥ २
सौमित्रे योऽभिषेकार्थे मम संभारसंभ्रमः ।
अभिषेकनिवृत्त्यर्थे सोऽस्तु संभारसंभ्रमः ॥ ३
यस्या मदभिषेकार्थे मानसं परितप्यते ।
माता नः सा यथा न स्यात्सविशङ्का तथा कुरु ॥ ४
तस्याः शङ्कामयं दुःखं मुहूर्तमपि नोत्सहे ।
मनसि प्रतिसंजातं सौमित्रेऽहमुपेक्षितुम् ॥ ५
न बुद्धिपूर्वं नाबुद्धं स्मरामीह कदाचन ।
मातॄणां वा पितुर्वाहं कृतमल्पं च विप्रियम् ॥ ६
सत्यः सत्याभिसंधश्च नित्यं सत्यपराक्रमः ।
परलोकभयाद्भीतो निर्भयोऽस्तु पिता मम ॥ ७
तस्यापि हि भवेदस्मिन्कर्मण्यप्रतिसंहृते ।
सत्यं नेति मनस्तापस्तस्य तापस्तपेच्च माम् ॥ ८

G. 2. 19. 7
B. 2. 22. 6
L. 2. 22. 5

## 19

☞ D5 missing for Sarga 19 ( cf. v.l. 2. 12. 12 ). For Sarga 19, Ś1 Ñ V1 B D1.4 M4 have a different version which is given at the end. Dm1 begins with ॐ; T2 श्रीरामाय नमः.

1 a ) D2 क्वथया; M3 स्वथता ( for व्यथया ). D6 ( before corr. ) हीनं; M3 ( also as in text ) रामं ( for दीनं ). — b ) T1 -विशेषम्. D2.4.7 अमर्षणं; D6 असमकर्षणं ( sic ) ( for अमर्षितम् ). — c ) Dt1 सरोषम् ( for श्वसन्तम् ). — d ) G1.2 M1 क्रोध-; Cg as in text ( for रोष- ). G2 -विस्फारि-तेक्षणे.

2 a ) Dm1 सौमित्रं. — b ) G1 प्रियः. — c ) T1 उ० ०ई. — d ) T1( after corr. sec. m. as in text ) M3 सत्वम् ; Cr.m.g.t as in text ( for सत्त्वम् ). — After 2, Dg1 Dt1 Dd1 Dm1 T G M1–3 ( G2 M1.2 ins. lines 3–4 after 3 ) ins.; D2.4.6.7 ins. l. 3 only after l. 4 of 485* :

484* निगृह्य रोषं शोकं च धैर्यमाश्रित्य केवलम् ।
अवमानं निरस्यैनं गृहीत्वा हर्षमुत्तमम् ।
उपकॢप्तं हि यत्किंचिदभिषेकार्थमद्य मे ।
सर्वं विसर्जय क्षिप्रं कुरु कार्यं निरत्ययम् ।

[ ( l. 1 ) T1 M3 transp. रोषं and शोकं. Dt1 आक्रम्य ( for आश्रित्य ). — ( l. 2 ) Dg1 [ ह ]र्षं; Dt1 [ ह ]र्ष; G2 M1 [ ए ]व; M2.3 [ ह ]र्षं ( for [ ह ]र्ष ). T1 ०र्मम् ( for ०र्षम् ). — ( l. 3 ) Dg1 उपकॢप्तं; D6 उपक्लिष्टं; Cg as above ( for उपकॢप्तम् ). Dt1 Dd1 Dm1 यत्तेत्ने ( with hiatus ); D2.4.7 G2 M1.2 न च°; D6 तु च° ( for हि यत्किंचिद् ). Dt1 Dd1 ह्यद्य; D2.4.6.7 अत्र मे; T2 उत्तमे ( for अद्य मे ). — ( l. 4 ) Dt1 Dd1 Dm1 M3 निवर्तय ( for विसर्जय ). Dt1 निरत्ययं; T2 निरत्ययः ( for निरत्ययम् ). ※ Cv : निगृह्येत्यादेः श्लोकस्यानन्तरं उपकॢप्तमित्यादिश्लोको द्रष्टव्यः । अस्य चानन्तरं सौमित्रे इत्यादि द्रष्टव्यः । विपर्यासस्तु लेखकप्रमादकृतः । ※ ]

3 a ) Dg1 Dm1( before corr. ) G2 M1–3 Ck [ ऽ ]भिषेकार्थो( Dg1 °र्थौ ) ( for ऽभिषेकार्थे ). — T2 om. ( hapl. ) 3cd. — After 3, G2 M1.2 ins. l. 3–4 of 484*.

4 a ) Dg1 Dt1 Dd1 Dm1 T G M1.2 Cm.g.k.t अभिषेकार्थं; Cr as in text ( for अभिषेकार्थे ). ※ Cr : यस्याः कैकेय्याः मदभिषेकार्थे मदभिषेकप्रयोजनमुद्दिश्य मदभिषेक इति पाठः । ※ — c ) Dg1 G1 मम; G2 M1 मे सा ( for नः सा ). — d ) M3 सविशंका ( sic ). — For 1c–4, D2.4.6.7 subst. :

485* अभिगम्य हि तं किंचिल्लक्ष्मणं लक्षणान्वितम् ।
राघवो भ्रातरं भ्राता व्याजहार प्रियाप्रिये ।
स्वसैन्यमपि वीर्येण विजित्य पुरुषर्षभ ।
सौमित्रे योऽभिषेकार्थं तवार्थं तात संभ्रमः ।
तं विमुञ्च स्थिरो भूत्वा शृणु चेदं वचो मम । [5]
माता नः सा यथा न स्यात्सशङ्केव यवीयसी ।

[ ( l. 1 ) D2.6 [ अ ]भितः ( for हि तं ). D7 सानंदं ( for किंचिल् ). — ( l. 2 ) D2.4 राघवं ( for राघवो ). D6 राघवो ( for भ्रातरं ). D6 प्रिये वचः ( for प्रियाप्रिये ). — ( l. 3 ) D2.4 स्वसैन्यम् ( for स्वसैन्यम् ). D6 धैर्येण ( for वीर्येण ). D6 पुरुषर्षभः ( sic ). — After l. 4, all the above MSS. ins. l. 3 of 484*. — ( l. 6 ) D7 नमाद् ( for नः सा ). D6 भूपो ( for न स्याद् ). D2 सशंकेन; D6 न शंकेत ( for सशङ्केव ). D6 तथा कुरु ( for यवीयसी ). ]

5 D2.4.6.7 transp. 5 and 6. — a ) D2.4.6.7 तस्माद् ( for तस्याः ). D6 संकालयं; G2 शंकामयमान् ( both sic ) ( for शङ्कामयं ). — c ) D2.4.6.7 तस्माद्( D2.6 तस्या ) मनसि ( for मनसि प्रति- ). — d ) D2.4.6.7 लक्ष्मण ( for सौमित्रे ). Dg1 ( before corr. as in text ) अपेक्षितुं; Dm1 Ct1 उदीक्षितुं; T1 उपेक्षितं; Cm as in text ( for उपेक्षितुम् ).

6 D2.4.6.7 transp. 5 and 6. — a ) D2.4 नाबुद्धि( D6 °द्धि [ sic ] ) ( for नाबुद्धं ). — b ) D2.4 हि ( for [ इ ]ह ). D4.7 कथंचन ( for कदाचन ). — c ) D2.6.7 [ अ ]पि ( for [ अ ]हं ). — d ) T1 कृतकल्पं. D2 कृतं स्वल्पं यथाप्रियं; D4.7 कृतं स्वल्पमथाप्रियं.

7 a ) D4.7 सत्यं ( for सत्यः ). — b ) T1 सत्यं; M3 नित्य- ( for नित्यं ). — d ) D2.4.6.7 ततो भवतु निर्भयः.

8 a ) D4.7 तस्माथा( D7 °द्या )भिभवे तस्मिन्. — b ) D2.4.6.7 [ अ ]प्रतिपूजिते; T2 [ अ ]पि संहृते ( subm. ); Cr

G. 2. 19. 8
B. 2. 22. 11
L. 2. 22. 6

अभिषेकविधानं तु तस्मात्संहृत्य लक्ष्मण ।
अन्वगेवाहमिच्छामि वनं गन्तुमितः पुनः ॥ ९
मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा ।
सुतं भरतमव्यग्रमभिषेचयिता ततः ॥ १०
मयि चीराजिनधरे जटामण्डलधारिणि ।
गतेऽरण्यं च कैकेय्या भविष्यति मनःसुखम् ॥ ११
बुद्धिः प्रणीता येनेयं मनश्च सुसमाहितम् ।
तत्तु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि माचिरम् ॥ १२
कृतान्तस्त्वेव सौमित्रे द्रष्टव्यो मत्प्रवासने ।
राज्यस्य च वितीर्णस्य पुनरेव निवर्तने ॥ १३
कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम पीडने ।
यदि भावो न दैवोऽयं कृतान्तविहितो भवेत् ॥ १४
जानासि हि यथा सौम्य न मातृषु ममान्तरम् ।
भूतपूर्वं विशेषो वा तस्या मयि सुतेऽपि वा ॥ १५
सोऽभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः ।
उग्रैर्वाक्यैरहं तस्या नान्यद्दैवात्समर्थये ॥ १६
कथं प्रकृतिसंपन्ना राजपुत्री तथागुणा ।
ब्रूयात्सा प्राकृतेव स्त्री मत्पीडां भर्तृसंनिधौ ॥ १७
यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते ।
व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः ॥ १८

---

[ स ]प्रतिसंसृतं. — c) M3 नेति (for नेति). — d) D2.4.5.7 स( D4.7 सं ) तापस्तापयेद्धि मां.

9 a) M3 तत् (for तु). Dd1 अभिषेकादिधानं तु (sic); D2.4.5.7 अभिषेकाभिकाद्धि( D5 °षे )द्वं. — b) D2.5 मयि मुंचेत्; D4.7 मयि मुंच च (for तस्मात्संहृत्य). — c) Dg1 अन्वगेवाहम् (sic). — d) Dd1 इतः पुरः; Dm1 इतः पुरे; D2.4.5.7 अभित्वरन्; G2 M1 इतः पुरात् (for इतः पुनः). ❀ Ck : इतः पुरः पुरस्तादग्रतरगामी । ❀

10 a) T2 मनः- (sic) (for मम). — b) G2.3 नृपात्मज (for नृपात्मजा). — d) Dg1 Dt1 Dd1 Dm1 G M1.2 अभिषेक्ष्यती( G2 °षी [ sic ]; G3 °ता ) (for अभिषेचयिता). —For 10, D2.4.5.7 subst. l. 19–20 of 489* and read after 11.

11 a) D4 यदि (for मयि). — c) Dg1 D5 (before corr.) [ ऽ ]रण्ये (for ऽरण्यं). D2.4.5.7 हि (for च). Dm1 कैकेय्यां (for °य्या). —After 11, D2.4.5.7 read l. 19–20 of 489*.

12 ab) Dt1 D2 प्रणिहिता( D2 [ before corr. ] °ते ) येन; D5 प्रणिहितेयेयं; D4.7 प्रणिहिता येयं (for प्रणीता येनेयं). Dt1 D6 मनश्चानु समाहितं. Ct cites ab as in text. — cd) Dt1 Dd1 T G M1–3 all Cs तं (for तत्). Dg1 Dm1 नु; Ck as in text (for तु). Dg1 संक्लिष्टुं; Cg as in text (for संक्लेष्टुं). T1 damaged from र in माचिरम् up to राज्यस्य in 13c. D2.4.5.7 मातापित्रोः प्रियं कर्तुं गतोहं तत्र किं पुनः. —After 12, Dm1 ins. राम सीता ३.

13 T1 damaged up to राज्यस्य in 13c (cf. v.l. 12). D2.4.5.7 read 13 after 16. — a) Dt1 D2 कृतांत एव (for कृतान्तस्त्वेव). — b) D2.5 दृष्टव्यो (sic) (for द्रष्टव्यो). Dd1 Dm1 Ct विवासने; D5 M3 प्रवासने; Cm as in text (for प्रवासने). — c) D4.7 हि (for च). — d) T1 एवं (for एव).

14 a) D2.4.5.7 विपत्तुपायाः (for प्रतिपत्तिर्हि). — b) Dt1 वेदने; D6 पीडनं (for पीडने). — c) Dm1 reads न दैवो in marg. M3 दैवो वा (for दैवोऽयं). Dt1 Dd1 G1 यदि तस्या न भावोयं. ❀ Ct : यदि कृतान्तविहितस्तत्प्रेरितोऽयं भावोऽभिप्रायो न भवेत् । ❀ — d) T2 कृतांतमिवतो भवेत् (sic). —For 14cd, D2.4.5.7 subst. :

486* बुद्धिर्यदि न मे भावमेवं भावो भवेत्पुनः ।

[ D7 मन (for न मे). D4.7 भ्रातर्; D5 तावद् (for भावम्). D2 एवं भावं भवेत्पुनः (for the post. half).]

15 a) D2.4.5.7 जानीषे (for जानासि). — c) G2 M1 भूतपूर्वो; M3 भूतपूर्वः; Cv.r.m.g.t as in text (for भूतपूर्वं). D2.4.5.7 तथा तासां (for विशेषो वा). — d) Dg1 Dd1 Dm1 तस्यामपि; Cm.g as in text (for तस्या मयि). D2.4.5.7 मयि ते( D2 स्वे )षु सुतेषु वा.

16 a) D2.4.5.7 -निवृत्यर्थं; G2 -निवृत्यर्थे. — b) D2.4.5.7 प्रवासार्थं च; G2 प्रवासार्थे तु-. D4.7 दुर्धरैः (for दुर्वचैः). — c) D2 वाक्यम् (for वाक्यैर्). D2 मामा; D4.5.7 नान्यद् (for तस्या). — d) Dg1 Dd1 Dm1 नान्यं दै( Dd1 दे )वात्; D2.4.5.7 दैवादिति; G1 नान्यदेवात्; Cm.g as in text (for नान्यद्दैवात्). D6 समं कृतं (for समर्थये). G2 नान्यद्दैवार्थ- मर्थये. —After 16, D2.4.5.7 read 13.

17 a) D6 प्रकृतिमार्ग वा (sic); D4.7 प्रि( D5 प्र ) कृतिमापन्ना (for प्रकृतिसंपन्ना). — b) T2 राजपुत्र (for °त्री). — c) Dd1 D4.7 T2 G M1–3 भूयात्सु-; Dm1 बूयात्सु; D2 भ्रयात्सु (sic); T1 भूयात्सु- (for ब्रूयात्सा). ❀ Cm.k भर्तृसंनिधौ कथं कुर्यात् । ❀ — d) Dt1 Ctp मद्वधे; Ct °वधं (for मत्पीडां).

18 a) D6 च (for तु). Dm1 मद् (for तद्). D2.4.5.7 transp. यद् and तद्. — b) D2.4.5.7 निपात्यते (for न हन्यते). ❀ Ct : तद्दैवं पञ्चतेषु भूताधिष्ठातृषु ब्रह्मादिष्वपि न हन्यते । ❀ — c) D7 च मयि (by transp.). — d) D2.4.5.7 पतितं तद्विपर्यये.

कश्चिद्दैवेन सौमित्रे योद्धुमुत्सहते पुमान् ।
यस्य न ग्रहणं किंचित्कर्मणोऽन्यत्र दृश्यते ॥ १९

सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ ।
यस्य किंचित्तथाभूतं ननु दैवस्य कर्म तत् ॥ २०

व्याहतेऽप्यभिषेके मे परितापो न विद्यते ।
तस्मादपरितापः संस्त्वमप्यनुविधाय माम् ।
प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियाम् ॥ २१

न लक्ष्मणास्मिन्मम राज्यविघ्ने
    माता यवीयस्यतिशङ्कनीया ।
दैवाभिपन्ना हि वदन्त्यनिष्टं
    जानासि दैवं च तथाप्रभावम् ॥ २२

G. 2. 19. 22
B. 2. 22. 30
L. 2. 22. 20

इति श्रीरामायणे अयोध्याकाण्डे एकोनविंशः सर्गः ॥१९॥

---

19 a) Dt1 Dd1 D2.4 T G1 M2.3 Ct.t कश्च; Cm as in text (for कश्चिद्). G2 देवेन (for दैवेन). —b) D5 योधम् (for योद्धुम्). D7 उत्सहते (sic). D4.7 सह (for पुमान्). —c) D2 तस्य (for यस्य). B (ed.) न. —d) Dt1 Ct कर्मणोन्यत्र; D2.4.7 कृतमेवास्य; D5 °र्मणोन्यत्र (sic). G2 °णस्तत्र (for कर्मणोऽन्यत्र).

20 ab) D4 भयोद्वेगौ (for भयक्रोधौ). Dd1 सुखदुःखे भयं क्रोधौ (sic); G2 सुखदुःखभयक्रोधौ; M3 सुखदुःखःभयक्रोधा (for a). M3 भयाभवे (for भवाभवौ). D4 लाभालाभभवाभवाः; M2 लाभालाभे भयाभवे (for b). D2.4.7 सुखदुःख[ D7 °खे ]भयोद्वेगला[ D7 °लौ ]लाभालाभभवाभवाः( D2 °भौ भवाभवौ ). —c) Dg1 Dm1 D2.4 T1.2 G M1-3 Cm.g.k यच्च किंचित्; D5 यत्किंचित्; D7 यथाकिंचित्; Ct as in text (for यस्य किं°). D5 यथाभूतं. —d) D2.4.6.7 सर्वं (for ननु). D5 देवस्य (for दै°). —After 20, Dg1 Dt1 Dd1 Dm1 D2.4.7 T G M1-3 ins.:

487* अपयोऽप्युग्रतपसो दैवेनाभिप्रपीडिताः ।
उत्सृज्य नियमांस्तीव्रान्भ्रश्यन्ते काममन्युभिः ।
असंकल्पितमेवेह यदकस्मात्प्रवर्तते ।
निवर्त्यारम्भमारब्धं ननु दैवस्य कर्म तत् ।
एतया तत्त्वया बुद्ध्या संस्तभ्यात्मानमात्मना ।    [5]

[Before l. 1, D4.7 read l. 5. —(l. 1) D2 [ऽ]पि (for ऽपि). Dg1 [ऽ]ह प्रपीडिताः; Dt1 [अ]भिप्रपीडिताः; Dm1 [अ]पि°; D6 [अ]भिनिपीडिताः; T2 [अ]पि°; G3 [अ]पि प्र°; M3 [अ]भिप्रपीडिताः (for [अ]भिप्रपीडिताः). —(l. 2) D4 तीव्राणां; T3 तीव्रा (for तीव्रान्). D2 संसृष्टाः; D4.7 विशिष्टाः; T G3 मुह्यन्ते; Cm.g as above (for भ्रश्यन्ते). —G3 om. l. 4. —(l. 4) Dt1 T2 Ct निवर्त्यारम्भमारम्भैर् (T2 °भे); D2 व्याहतारम्भमारम्भं; D4.7 व्याहते च समारम्भे( D4 [marg. sec. m.] °कोपे ) (for the prior half). D2.4.7 विद्धि (for ननु). M3 दैव० कस्य. ※ Cr : ननु दैवस्य कार्यं नभिनिति । निवर्त्येति पाठे निवर्त्यदैवकं । ※ —After l. 4, Dm1 ins. राम. —D4.7 read l. 5 before l. 1. —(l. 5) D2 (before corr.) तत्त्वया; D2 तु तया (for तत्त्वया). D2 विभावय; D4.7 निश्चित्य; D5 निरुद्धय (for संस्तभ्य). M3 चात्मना (for चात्मना).]

21 a) D2 च (for ऽपि). G1 व्याहते॰भिषे°. —b) D2.4.6.7 जायते (for विद्यते). —c) D2.4.5.7 तस्मादपरिसंतापः. —d) Dm1 तम् (sic) (for त्वम्). D4.7 [अ]नुविधस्व; D5 [अ]नुविधस्व (sic) (for °धाय). —e) D4.7 प्रतिसंहर मे भ्रातर्. —f) Dt1 D5 T2 अभिषेचनिकां (D5 °कां; T2 °कीं ); Dm1 अभिषेचनकीं. D5 क्रिया. Dg1 D2.4.7 आभिषेचनिकाः( Dg1 °निकीः ) क्रियाः. —After 21, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins.:

488* शुभिरेव घटैः सर्वैरभिषेचनसंभृतैः ।
मम लक्ष्मण तापस्ये व्रतस्नानं भविष्यति ।
अथवा किं ममैतेन राजद्रव्यमयेन तु ।
उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ।
मा च लक्ष्मण संतापं कार्षीर्लक्ष्म्या विपर्यये ।    [5]
राज्यं वा वनवासो वा वनवासो महोदयः ।

[(l. 3) Dg1 T (T2 after corr. pr. m.) G1 M3 राज- (for राज्य-). Dg1 M3 Cg -अयेन; Cgp -मयेन as above. —(l. 4) Dg1 कलशान्; Cg कलशैः as above. —(l. 6) T1 वने वासो (for the second वनवासो).]

22 a) Dg1 T G M1-3 खलु कार्यविघ्ने (for मम राज्यविघ्ने). —b) Dt1 Dd1 D2.4.7 Ct [अ]भि-; Cm as in text (for [अ]ति-). Dd1 -शंकितव्याः; Dm1 D2.4.6.7 G1.2 M1 Ct -शंकितव्या; Cm as in text (for -शङ्कनीया). —c) Dg1 दैवाभिपन्ना हि भवन्त्यनिष्टाः; Dt1 D2.4.5.7 दैवाभिपन्नो (Dt1 °न्ना) न( D5 हि) पिता कथंचित्. —d) Dd1 जानामि. Dt1 Dd1 Dm1 D2.4.6.7 हि (for च). D2.4.6.7 यथाप्रभावं; G2 तथा प्रभावः; Cm यथाप्रभावं (for तथाप्रभावम्). —For Sarga 19, Ś1 Ñ V1 B D1.3 M4 subst.:

489* इत्युक्त्वा मातरं रामो भूयो लक्ष्मणमब्रवीत्।
दृष्ट्वा तथैव सामर्षं निःश्वसन्तमिवोरगम्॥*
(3) योऽयं मदभिषेकार्थं तव लक्ष्मण संभ्रमः।
तमेवार्हसि कर्तुं त्वं मत्प्रस्थानाय संभ्रमम्।
(4) यस्या मदभिषेकार्थं मनो विपरितप्यते। [5]
माता मे सा यथा भूयः शङ्कते न तथा कुरु।
न बुद्धिपूर्वं नाज्ञानान्मातॄणां मातृनन्दन।
कृतपूर्वमहं वीर स्मरामि किंचिदप्रियम्।
तस्मात्मच्छङ्काकृतं दुःखं मुहूर्तमपि लक्ष्मण।
उपेक्षितुमशक्तोऽस्मि जीवितेन हि ते शपे। [10]
मिथ्यावचनभीरुश्च सत्यधर्मपरायणः।
पिता मे निर्भयोऽस्त्वाशु मयि लक्ष्मण निर्गते।
तस्यापि च भवेच्छङ्का कदाचिन्मयि लक्ष्मण।
गच्छेन्न वेति सा चापि शङ्का मा भून्महीपतेः।
अभिषेकाभिलापं च क्षुभ्नेमं मम लक्ष्मण। [15]
संप्रत्येवाहमिच्छामि वनं गन्तुमितः पुरात्।
(11) मयि चीराजिनधरे जटामण्डलधारिणि।
गतेऽरण्यं च कैकेय्या भविष्यति मनःसुखम्।
मयि प्रव्रजिते देवी कृतकृत्या सुनिर्वृता।
आत्मानमभिज्ञानातु पितुश्चानृण्यमस्तु मे। [20]
एवं मे निश्चिता बुद्धिर्मनश्चैव समाहितम्।
न विलम्बितुमिच्छामि मुहूर्तमपि कर्हिचित्।
कारणं तु कृतान्तोऽत्र द्रष्टव्यो मद्विनिग्रहे।
यौवराज्याभिषेकस्य तथैवास्य विनिग्रहे।
कैकेयी च प्रकृत्यैव सदा मां प्रति वत्सला। [25]
सत्यं मत्परिपीडार्थं बलाद्दैवेन मोहिता।
तदुक्तं परुषं यच्च तत्कृतान्तकृतं स्मर।
नित्यं मातृषु मे प्रीतिर्विशेषेण लक्ष्मण।
सर्वास्वपि विशेषेण तासामपि तथा मयि।
अनुक्तपूर्वं कैकेय्या यदुक्तं परुषं रुषा। [30]
कथं प्रकृतिकल्याणी राजर्षिकुलजा सती।
ब्रूयादि प्राकृतस्त्रीव मां तथा पितृसंनिधौ।
दैवं स्वभावसंसिद्धमचिन्त्यमिति मे मतिः।
तन्नूनं पतितं मूर्ध्नि मम भाग्यपरिक्षयात्।
कश्चिद्दैवेन सौमित्रे योद्धुमुत्सहते सह। [35]
यस्येह शिग्रहोपायो न कथंचन विद्यते।
सुखदुःखभयक्रोधलाभालाभभवाभवाः।
नृणां भवन्ति दैवेन न भवन्ति च लक्ष्मण।
अवश्यंभावि व्यसनं सर्वैस्तदिति पश्यतः।
(21^{ab}) व्याहतेऽप्यभिषेके मे परितापो न विद्यते। [40]
तस्मात्त्वमपि मे बुद्धिमनुवर्तितुमर्हसि।
प्रतिसंस्तम्भयात्मानं मा च शोके मनः कृथाः।
(22^{ab}) न लक्ष्मणास्मिन्मम राज्यविघ्ने
माता यवीयस्यभिशङ्कनीया।
न चैव राजात्र विशङ्कनीयो [45]
दैवं हि कोऽतिक्रमितुं समर्थः।

[(l. 1) M4 transp. रामो and भूयो. —(l. 2) B1 सामर्षी; D1 सामर्षं (sic) (for सामर्षं). —(l. 3) Ñ1 अभिषेकाय; Ñ2 अभिषेकार्थे. —(l. 4) V1 तदेवार्हसि. D1 M4 कर्तुमर्हस्त्वेनमं (M4 °तदं) त्व (for the prior half). Ś1 D4 मत्प्रस्थानेन (D4 °स) संभ्रम (for the post. half). —(l. 5) V1 यस्या (for यस्या). Ś1 D1.4 M4 मद् (for मम). M4 अभिषेकार्थे. D1 M4 मनो विपरिवर्तते (for the post. half). —(l. 6) Ñ1 illeg. for मे. V1 तथा (for यथा). Ñ1 V1 B4 न शङ्कते; Ñ2 B2.3 शङ्कते न; D1 न शंकेत; M4 न शंकेत (for शङ्कते न). B4 तदा (for तथा). —(l. 7) B4 न ज्ञानात् (for नाज्ञा°). B4 D1 मातृनन्दन. —(l. 8) V1 तस्मा:; D1 तात (for वीर). D1 किंचिद् (for कंचिद्). —Ś1 D4 om. (hapl.) l. 10-13. —(l. 10) B4 उपेक्षितुम्. B2 (before corr.) अशक्तोस्मि (sic); M4 न शक्तोस्मि (for अशक्तोऽस्मि). —(l. 11) V1 भीतश्च (for भीरुश्च). —(l. 12) Ñ1 पाप; V1 B1 स्वस्तु; D1 (s)स्त्वथ; M4 चास्तु (for ऽस्त्वाशु). —(l. 13) D1 हि; M4 न (for च). B4 यदि (for मयि). —(l. 14) Ś1 D4 वेति मा चाप्यत; Ñ2 वेत्य°; V1 वापि°; B2.3 चेति°; D1 चेतसा चापि (for वेति सा चापि). Ś1 D4 शंका माभ महीपतेः; D1 M4 शंका मां यदि (M4 मा चापि) पीडयेत् (for the post. half). —(l. 15) D1 M4 ममाभिषेकाभिलापं (M4 °पे) (for the prior half); V1 क्षुभ्नेन; M4 तथेत. (for क्षुभ्नेमं). D1 M4 साधु (for मम). —(l. 16) D1 सांप्रतं त्वहम्; D4 संप्रत्येवाहम् (sic); M4 सांप्रतं त्वहम् (for संप्रत्येवाहम्). B4 पुरी (sic) (for पुरात्). —(l. 17) Ñ1 धारिणि; V1 धारिणी (for धारिणि). D1 M4 जटाधरे च (M4 हि) सौमित्रे मयि निर्वासिते पुरा (M4 °रात्). —(l. 18) Ñ B2 गतेऽरण्यं हि; V1 गच्छे अरण्यं (sic); B4 गते वने च (for गतेऽरण्यं च). D1 M4 विराग सत्कृतां (M4 °ते) चैकां राजा सुखमवाप्स्यति. —D2.4.5.7 subst. l. 19-20 for St. 10. —(l. 19) B4 प्रव्रजिते (sic). D1 M4 माता (for देवी). M4 om. from the post. half up to the prior half of l. 23. B4 (before corr.) कृतस्त्यं (for कृतकृत्या). Ñ2 सुनिर्वृते. D1 कृतकृत्या तु कैकयी (for the post. half). —(l. 20) Ś1 D4 मयि (for अभि°). Ñ1 B1 अस्तु मे; B2 अस्तु (for अस्तु मे). D1 जानातु मां सुखमास्ते राजा लक्ष्मण निर्गते. —(l. 21) Ś1 सुनिश्चिता. Ñ2 मनश्चैव. —(l. 22) Ñ1 कांश्चित् (sic). —(l. 23) D1 वै (for तु). Ś1 D4 सौमित्रे; Ñ2 द्रष्टव्यो (sic) (for द्रष्टव्यो). B1.4 D1 M4 विनाशने; B2 विनाशने (for विनिग्रहे). —(l. 24) M4 यौवराज्याभिषेके च (for the prior half). —(l. 25) B1 M4 तु (for च). —(l. 26) V1 B1.2.4 D1 M4 मन्ये (for सत्यं). B4 विपरीतार्थं (for परिपीडार्थं). V1 देवेन (for दैवेन). Ś1 D4 बलादेव (D4 °दैव) विमोहिता (for the post. half). —D1 M4 read l. 27 after l. 30. —(l. 27) V1 यदुक्तं; D1 M4 तथोक्तं (M4 °क्त: [sic]) (for तदुक्तं). B4 परुषं (sic) (for परुषं). V1 किंचित्; D4 तच्च; M4 घोरं (for यच्च). —(l. 28) V1 मातृष्वमे (sic); B1 मातृषु मम (for °षु मे). B4 om. लक्ष्मण. D1 M4 जानासि हि यथा सौम्य नास्ति मातृषु मेतर. —(l. 29) B1 सर्वास्व; B2 सर्वास्वपि (sic). B4 [अ]विशेषेण. Ś1 D4 सर्वासामविशेषेण (for the prior half). V1 यथापि (for तथा मयि). M4

# २०

इति ब्रुवति रामे तु लक्ष्मणोऽधःशिरा मुहुः ।
श्रुत्वा मध्यं जगामेव मनसा दुःखहर्षयोः ॥ १
तदा तु बद्ध्वा भ्रुकुटीं भ्रुवोर्मध्ये नरर्षभः ।
निशश्वास महासर्पो बिलस्थ इव रोषितः ॥ २
तस्य दुष्प्रतिवीक्ष्यं तद्भ्रुकुटीसहितं तदा ।
बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३

G. 2. 20. 5
B. 2. 23. 3
L. 2. 23. 3

---

तस्मादिति हि मे मतिः ( for the post. half ). —( l. 30 ) B6 -पूर्णं; M4 -पूर्णः ( for पूर्णं ). M4 पश्यं ( for कैकेय्या ). V1 विमुक्तं ( for यदुक्तं ). B1 एकं. B3 पुरा ( for क्या ). D1 M4 पश्यं( M4 कैकेय्या ) यदहं क्या ( for the post. half ). —( l. 32 ) Ñ2 B6 प्राकृता कोत; V1 B3 M4 प्राकृतमीयम्( B4 °मिर् ) ( for प्राकृतमीव ). Ñ1 मामाप ( for मां तथा ). —( l. 33 ) Ś1 Ñ1 B4 D6 M4 दैव- ( for दैवं ). Ś1 D6 -संविद्( for -संस्थितम् ). Ś1 D6 अचिन्त्येति च; M4 अनिन्त्यमिति ( for अचिन्त्यमिति ). —( l. 34 ) B4 ते ( for तत् ). Ś1 D6 M4 -विपर्य( D6 °ॅ )यात् ( for -परिप्लवात् ). —( l. 35 ) Ś1 Ñ D6 M4 कश्च; B1 कश्चिद्; D1 को हि ( for कश्चिद् ). M4 अतः ( for नाह ). —( l. 36 ) M4 यस्य न ( for यस्येह ). Ś1 B1 D6 M4 निष्प्रतोपायो. D1 यस्य संनिष्ठतोपायो ( for the prior half ). Ś1 M4 कथंचन न ( by transp. ). —After l. 36, B4 reads for the first time l. 41–42, repeating them in their proper place. —D1 om. ( hapl. ) l. 37–40. —( l. 37 ) B3 सुखदुःखभयक्रोध- ( also as above) ( for the prior half ). —( l. 38 ) Ś1 V1 B4 D6 नूनं. —After line 38, B6 ( up to शुभाशुभौ in l. 4 in marg. ) ins. :

489( A )* यत्रो ह्यभिमुखस्यास्य नरस्य विविधागमः ।
दैवं नैवाभिवर्तेन्ते दानध्यानपरायणाः ।
अथ कल्पित पश्यामो योऽस्मान्संस्थापयेन्मनः ।
शुभाशुभौ वा सौमित्रे स दैवमिति मे मतिः ।

—( l. 39 ) V1 मत्वा भाति; D6 M4 असत्यमति. —D6 reads l. 40–41 in marg. —( l. 40 ) B4 व्याहतोऽप्यभिषेको मे; D6 विहते°; M4 व्यतीते° ( for the prior half ). —( l. 41 ) D1 M4 मद्- ( for मे ). —( l. 42 ) Ś1 D6 प्रतिसंहितव्यमाने; V1 प्रतिसंहृत्यमानायां; D1 पर°; M4 संहृतभयाम्नायामि ( for the prior half ). B4 ( first time ) om. the post. half. —( l. 43 ) B4 राम- ( for मा ). V1 सान्त्वने. —( l. 44 ) Ñ1 [ अ ]भि ( for [ अ ]भि- ). Ñ2 -सान्त्विता ( sic ); D1 -संपिबन्ना ( for -सान्त्वनीया ). —( l. 45 ) Ñ2 B6 [ अ ]स ( for [ च ]अ ). Ñ2 B3 D1 [ अ ]पि; V1 [ अ ]पि- ( for [ अ ]अ ). D1 M4 विशङ्कितव्येत. —( l. 46 ) Ñ1 दैवं. D1 तु ( for हि ). D1 [ ऽ ]पि इषितुं ( for ऽभिकाङ्क्षितुं ). ]

Colophon. —*Sarga name* : Ś1 Ñ V1 B2–4 D1.4 लक्ष्मणानुनयः; B1 रामवाक्यं; Dm1 D2.4.5.7 लक्ष्मणसंभाषणो ( D7 °णं ). —*Sarga no.* ( figures, words or both ): Ñ1 B4 D6 om. Ś1 Dg1 Dt1 Dd1 Dm1 D2 T G M1–3 22; Ñ2 V1 B1–3 19 ( as in text ); D1 75; D4.7 24; D5 27; M4 20. —After colophon, D6 G M1.2 conclude with श्री( D6 = )रामाय नमः; T3 श्रीरामचन्द्राय नमः.

## 20

D2 missing for Sarga 20 ( cf. v.l. 2. 12. 12 ). Dm1 begins with श्री.

1 a ) B4 रामेति ( sic ). —b ) Ś1 Ñ V1 B1–3 D1.2.6 M4 [ ऽ ]धोमुखः; B4 [ ऽ ]वाङ्मुखः; Dt1 D4.5.7 [ ऽ ]वाक्शिराः; Ct as in text ( for [ ऽ ]धःशिराः ). Ś1 Ñ V1 B D1.2.6 M4 स्थितः; Dt1 Ct इव; Dd1 Dm1 तदा; D4.7 ततः ( for मुहुः ). —M4 om. 1cd. —c ) Ñ1 Dt1 D4.5.7 ध्यात्वा ( for श्रुत्वा ). Ñ1 [ अ ]थ; Dg1 [ ए ]व; Dt1 D4.5.7 [ आ ]शु ( for [ इ ]व ). —d ) Ñ1 Dt1 D4.5.7 सहसा ( for मनसा ). Ñ1 Dt1 D4.5.7 दैन्यहर्षयोः; Dg1 हर्षदुःखयोः ( by transp. ); Cg.t as in text ( for दुःखहर्षयोः ). —For 1cd, Ś1 Ñ2 V1 B D1.2.6 subst. :

490* दुःखामर्षपरीतात्मा दर्पो विप्लुतलोचनः ।

[ B1 ( after corr. *sup. lin.* as above ) दुःखायास- ( for दुःखामर्ष- ). V1 -परीतोऽसौ ( for -परीतात्मा ). Ś1 D6 विप्लुतचेतनः; D1.2 अचललोचनः ( for विप्लु° ). ]

2 a ) Dg1 Dt1 D4.5.7 T3 G2 Ck.t तथा; Cg as in text ( for तदा ). D4.7 बद्ध्वा च; D5 हि बद्ध्वा; T2 बद्ध्वा तु ( by transp. ); M1.2 तु कृत्वा ( for तु बद्ध्वा ). Ś1 Ñ V1 B D1.2.6 स बद्ध्वा( D1.2 बद्ध्वा च ) भ्रुकुटीं रोषात्; M4 क्रोधेन भ्रुकुटीं बद्ध्वा. —b ) G2 damaged for नरर्षभः. —After 2ab, M4 ins. :

491* हा कष्टं हा हतोऽस्मीति वाग्गद्गदमीरयन् ।

—c ) D1 निश्वासः; D2 निश्वासो ( both sic ); G( ed. ) निःश्वास. —d ) G2 बलस्थ ( sic ). D4.7 कोपितः ( for रोषितः ).

3 a ) Dm1 D5 T2.3 -वीक्ष्यं ( for -वीक्ष्यं ). D5 तु ( for तद् ). —b ) D6 -कुटिलं; D4.7 -संवृतं ( for -सहितं ). D4.5.7 मुखं ( for तदा ). —d ) D4.5.7 सदृशं भूरितेजसः. —For 3, Ś1 Ñ V1 B D1.2.6 M4 subst. :

492* कुपितस्य च तस्यासीद्भ्रुकुटीकुटिलं मुखम् ।
क्रुद्धस्येव मृगेन्द्रस्य दुर्धर्षं भूरितेजसः ।

[ ( l. 1 ) Ś1 D6 कुपितस्य तथा साक्षात्; D1.2 M4 तस्यासीद्भ्रुकुटि- लोलं ( for the prior half ). B4 भ्रुकुटिलं. —( l. 2 ) D1 M4 [ ए ]व ( for [ इ ]व ). Ś1 D6 विक्रमी; Ñ B2 दुर्दर्शं; B1 दुर्धर्ष; B3 M4 दुर्दर्शं ( for दुर्धर्षं ). V1 भुवि तेजसः ( sic ). ]

G. 2. 32. 30
B. 2. 32. 23
L. 2. 35. 0

ततः स पुरुषव्याघ्रस्तद्धनं लक्ष्मणः स्वयम् ।
यथोक्तं ब्राह्मणेन्द्राणामददाद्धनदो यथा ॥ १७
अथाब्रवीद्बाष्पकलांस्तिष्ठतश्चोपजीविनः ।
संप्रदाय बहुद्रव्यमेकैकस्योपजीविनः ॥ १८
लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम ।
अशून्यं कार्यमेकैकं यावदागमनं मम ॥ १९
इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनम् ।
उवाचेदं धनाध्यक्षं धनमानीयतामिति ।
ततोऽस्य धनमाजह्रुः सर्वमेवोपजीविनः ॥ २०
ततः स पुरुषव्याघ्रस्तद्धनं सहलक्ष्मणः ।
द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्योऽभ्यदापयत् ॥ २१

नंदेव; Dm1 यथा नो नंदेव; T1.2 G2 यथा च सा( G2 ॰ ) नंदेद्; T3 यथा नो नंदेत; G1 सा यथा नंदेव; M2 यथा तु नो नंदेद; M3 यथा न नंदेव ( for यथा नो नन्देव ). G3 ॰॰॰; M2 दक्षिण; Cr.m.g.t as above; Cm.p.k दक्षिणा ( for दक्षिणाम् ). —( l. 4 ) Dm1 यथा ( for तथा ). Dg1 सर्वांश्च; Dt1 Dd1 Dm1 G1 तान्सर्वान् ( by transp. ) ( for सर्वांस्तान् ). ]

17 ᵃ) Dt1 Dd1 Dm1 पुरुषशार्दूलस्. —ᵇ) Dt1 धनं ( for धनं ). —T1 damaged from लक्ष्मणः up to यथोक्तं in ᶜ. —ᵈ) M2 अददद् ( for अददाद् ). —For 17, Ś1 Ñ V1 B D1.2.4-7 M4 subst. :

757* इत्युक्तो लक्ष्मणो भ्राता धनं रामस्य सर्वशः ।
यथाज्ञप्तं ददौ तेभ्यः सर्वेभ्य उपजीविनम् ।

[ Ś1 om. l. 1 ( cf. v.l. 16 ). —( l. 1 ) B1.3 M4 भ्रातः. Ñ2 D4.6.7 धनमादाय सौवर्णम् ( for the post. half ). —( l. 2 ) Ś1 B1.3 D6 [ त ]द्दिष्टं; Ñ B2.4 [ आ ]दिष्टं ( for [ आ ]ज्ञप्तं ). Ñ1 V1 B1 D5 उपजीवितं( Ñ1 ॰नं; V1 ॰नः; B1 ॰नां ). Ś1 D6 अनविशतः( D6 अनविशन )जीवितं ( for the post. half ). ]

18 ᵃ) T G M1-3 बा( G3 -न )ष्पांस् ( for -कलांस् ). —ᶜᵈ) B( ed. ) स प्रदाय; G2 संप्रथाय ( for संप्रदाय ). —G2 damaged from मे up to स्यो. Dg1 [ उ ]पजीविनः; Dt1 Dd1 Dm1 T ( T2 before corr. ) Cm.k.t [ उ ]पजीवनं; G1 [ ॰ ]पजीविनो ( for [ उ ]पजीविनः ). —For 18, Ś1 Ñ B D1.2.4-7 subst. :

758* संविभज्य ततो रामः सर्वानाहूय सोऽब्रवीत् ।

[ D1.2 सर्वानुपजीविनं; D4.6.7 वचनं चाब्रवीच ह ( for the post. half ). ]

—D1.2 cont.; V1 M4 subst. for 18 :

759* उवाच तान्समाहूय सर्वानेव समासतः ।

[ M4 [ स ]द ( for तान् ). V1 समागतः; M4 समाहितान् . ]

19 ᵃᵇ) Dg1 [ श ]विपुलं ( for यद्वेश्म ). Ś1 Ñ V1 B D1.2.4-7 M4 कार्या भवद्भिर्नोत्कंठा रक्ष्यं( B4 ॰क्ष्यः; D1.2 ॰क्षो ) चे( D7 चे )दं गृहं मम. —ᶜ) Dt1 अशून्य- ( for ॰न्यं ). Ś1 Ñ V1 B D1.2.4-7 M4 लक्ष्मणस्य च यद्वेश्म( B3 [ after corr. m. ] सीतायाः ). —ᵈ) D6.7 आगमनात् ( for ॰नं ).

20 ᵃ) T1 damaged from तं in दुःखितं up to ᵇ. Dt1 दुःखित ( sic ). —ᵇ) T2 G1 उपजीवनं. —ᵈ) Dt1 मम ( for इति ). —ᵉ) T2 जनम् ( for धनम् ). —ᶠ) Dt1 Dd1 Dm1 सर्वे ( for सर्वम् ). —For 20, Ś1 Ñ V1 B D1.2.4-7 M4 subst. :

760* अनुजीविजनं राम इत्युक्त्वा शोककर्शितम् ।
धनाध्यक्षानुवाचेदं समाहूय पुनर्वचः ।
यदस्ति वित्तशेषं मे तदिहानय शेषतः ।
जानपदं प्रदास्यामि तदप्यहमशेषतः ।
इत्युक्ताः समुपाजह्रुर्धनशेषमशेषतः ।     [ 5 ]
रामाज्ञया धनाध्यक्षाः समुपादाय सर्वशः ।

[ ( l. 1 ) V1 B1 अनुजीविनि ( sic ) ( for अनुजीविजनं ). B1 इति इत्युक्त्वा ( sic ). Ś1 शोकपीडितं; Ñ2 B D4.6.7 शोककर्शितं ( B1 ॰तः; B4 ॰तां [ sic ] ) ( for शोककर्शितम् ). —( l. 2 ) V1 धनाध्यक्षम् . Ñ1 om. for समाहूय. V1 D1.2 M4 पुनः पुनः ( for पुनर्वचः ). —( l. 3 ) D6.7 यदि ( for यद् ). D1 शेषवित्तं ( for वित्तशेषं ). B1 शेषितः. Ś1 D4.6.7 सर्वमेवाशेष( Ś1 ॰षे )तः; Ñ2 तदिहानयशेषतः; D1.2 तदिहाय विशेषतः; M4 तदिहानयत द्रुतं ( for the post. half ). Ñ1 यावदिहानशेषं मे तावदानय शेषतः. —D6 om. ( hapl. ) l. 4-5. —( l. 4 ) B1 तदा ( for तद् ). Ñ1 B1.3 अशेषितः; Ñ2 B2.4 अशेषितः ( for अशेषतः ). V1 यावकेभ्यः समंततः ( for the post. half ). —B4 om. ( hapl. ); D6 reads in marg. l. 5. —( l. 5 ) Ś1 V1 [ इ ]त्यत ( for [ इ ]क्ताः ). Ñ2 समुपादाय; V1 धनं जगृहुः ( sic ); D2 धनमाजह्रुः ( for समुपाजह्रुः ). D2 वेशमशेषतः ( for धनशेषम् ). —( l. 6 ) V1 राजाज्ञया ( for रामा॰ ). M4 धनमादाय ( for समुपादाय ). Ś1 D6 सर्वतः. ]

—Thereafter D6 reads 22ᵃᵇ ( followed by 763* ).

—After 20, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins. :

761* स राशिः सुमहांस्तत्र दर्शनीयो ह्यदृश्यत ।

21 ᵃ) = 17ᵃ. —ᵈ) Dt1 कृपणेभ्यो. Dg1 [ ऽ ]पि Dt1 Dd1 Dm1 T G M1.2 हि ( for ऽभि- ). —For 21, Ś1 Ñ V1 B D1.2.4-7 M4 subst. :

762* तद्धनं विकलानाथकृपणेभ्यश्च राघवः ।
दरिद्रेभ्यश्च साधुभ्यो ददौ सर्वमशेषतः ।
यत्र वृद्धो दरिद्रश्च बहुभृत्यजनो द्विजः ।

[ Ś1 om. l. 1-2. —( l. 1 ) Ñ2 B3 विकलानाथ-; V1 B4 विकलानां च; B1 कुलहानाथ-; D4.6.7 कृपणानाथ- ( for विकलानाथ- ). V1 D1.2 M4 -दरिद्रेभ्यश्च; B1 D4.6.7 -विकलेभ्यश्च ( for -कृपणेभ्यश्च ). D6 [ ऽ ]थ ( for च ). —( l. 2 ) V1 D1.2 M4 कृपणेभ्यश्च

G. 2. 32. 42
B. 2. 32. 37
L. 2. 35. 41

स शाटीं त्वरितः कट्यां संभ्रान्तः परिवेष्ट्य ताम् ।
आविध्य दण्डं चिक्षेप सर्वप्राणेन वेगितः ॥ २५

उवाच च ततो रामस्तं गार्ग्यमभिसान्त्वयन् ।
मन्युर्न खलु कर्तव्यः परिहासो ह्ययं मम ॥ २६

चिपाणिन् ). —$^{e}$) Ñ1 illeg.; Dg1 °क्षपसि (sic); D4.5.7 °क्षेप्स्यसि (for परिक्षिपसि). Ś1 Ñ2 V1 B ततो गृहाण यावत्त्वं. —$^{f}$) Dg1 reads यावद् in marg. Dt1 Dd1 Dm1 M3 Cr (also as in text) k.t यावाप्स्यसे; Cm.g as in text (for °प्स्यसि). Ś1 Ñ2 B D2 स्वत्वं (B3 यदि) शक्तोसि (Ś1 B3 D2 °क्नोषि) रक्षितुं; V1 M3 गाः शक्तो (M3 before sec. m. corr. °क्तो) ऽभिरक्षितुं; D1.3 गाः शक्तोऽभिरक्षितुं; D4.5.7 गा (D5 या) वत्त्वं समवाप्स्यसि. —After 24, Ś1 Ñ V1 B D1.2.3 M3 ins. :

767* इति रामवचः श्रुत्वा त्रिजटो रामसंनिधौ ॥

—After 24, D2 ins. 768*.

25 $^{a}$) Dg1 Dt1 (after corr. m. as in text) परितः (for त्वरितः). Ck कक्ष्याः; Cg as in text (for कट्यां). D2 स शाटीं मलिनां कक्षौ. —$^{b}$) D2 समवेष्ट्य. Dt1 तं. —For 25$^{ab}$, D4.7 subst.; D2 ins. after 24 :

768* एवमुक्तस्तु रामेण त्रिजटो ब्राह्मणस्ततः ।

[D2 स (for तु). D7 तत्र (for ततः).]

—D2 reads च्य दण्डं चिक्षेप in marg. and om. from 25$^{d}$ up to बहुसाहस्रे in l. 2 of 770*. —$^{d}$) Dt1 Dd1 D4.7 Ct वेगतः; Cm as in text (for वेगितः). —For 25, Ś1 Ñ2 V1 B D1.2.3 M3 subst.; Ñ1 subst. l. 1 only for 25$^{cd}$ :

769* शाट्यात्मनो दृढां कक्षां बद्ध्वा संभ्रान्तमानसः ।
दण्डमुद्यम्य सहसा प्रतस्थे गोधनं प्रति ।
वृद्धभावात्क्षेपमाणो गाः स कालवित् स्वयम् ।

[(l. 1) Ś1 D2 स शाटनो; V1 समात्मना; B1.4 शाट्यावतो; B2 क्षोभ्यात्मनो; D1 सर्वात्मना (sic); D3 सर्वात्मना; M3 स्वात्मनो (for शाट्यात्मनो). V1 दृढा कक्षा (sic); B4 D2 M3 दृढां कक्ष्यां. V1 B3 (after corr. m. as above) -मोचनः; B4 -मानसे (for -मानसः). —(l. 3) B4 D2 (before corr.) वृद्धभावात् (for वृद्ध°). Ñ2 गाः स्व-; V1 D1.3 M3 गाः स-; B1 गाः सं-; B4 गासे (sic) (for गाः स).]

—After 25, Ñ1 Dg1 Dt1 Dd1 Dm1 D4.5.7 T G M1-3 ins. :

770* स नीत्वा सरयूपारं दण्डस्तस्य कराच्च्युतः ।
गोव्रजे बहुसाहस्रे पपातोक्षाणसंनिधौ ।
तं परिष्वज्य धर्मात्मा आ तस्मात्सरयूतटात् ।
आनयामास ता गावस्त्रिजटस्याश्रमं प्रति ।

[D2 om. up to बहुसाहस्रे in l. 2. —(l. 1) D2 गत्वा (for नीत्वा). Ñ1 Dg1 सरयूतीरं. Dt1 करोत्करः; T2 करच्युतः; Cr as above (for कराच्च्युतः). —(l. 2) D7 गावां. M3 om. बहु-.
Dd1 Dm1 [त ]ता च; D4.7 M1 Cg.k [त]क्षण-; G2 [त]क्षेण; M2 [त]क्षणम्; Cm.t as above (for [तु]क्षाण-). D4.5.7 -सन्निधि; M2 -सन्निधौ. —(l. 3) T2 प- (for तं). D4.7 परिष्वज्य. Ñ1 त्रिजटं; D4.5.7 हृष्टात्मा (for धर्मात्मा). Ñ1 D4.5.7 स तस्मात्; Dt1 आ तस्य; Cr.m.g as above (for आ तस्मात्). Dg1 D2 सरयू-. —(l. 4) Ñ1 illeg. up to ता. —T1 damaged from गावस् up to राम in 26$^{a}$. Ñ1 तावस्; T2 ते गाव; T3 तावत्; G2 M1.2 गा वै; G3 ते गाव (sic) (for गावस्). D4.5.7 आनायत्ततो रामस् (for the prior half). Ñ1 Dg1 G1 M2 Cm त्रिजटम्; D2 त्रिजट-मु- (for त्रिजटस्य). D7 [आ]श्रम.]

26 T1 missing up to राम in $^{a}$ (cf. v.l. 25). —$^{a}$) Ś1 Ñ V1 B D1.2.4-7 M3 तमुवाच; G1 M2 उवाच स (for उवाच च). Dt1 Dd1 Dm1 तदा (for ततो). —$^{b}$) T2 G2 M1 अभिहर्षयन्. Ś1 Ñ2 V1 B D1.2.3 M3 त्रिजटं द्विजम् (V1 °मु)त्तमं; Ñ1 D4.5.7 प्रहसन्वै (Ñ1 °न्विक्षि [sic]) द्विजोत्तमं. —$^{d}$) M2 (after corr. sec. m. as in text) परिहास्यो. Dm1 तु; Cm [ऽ]पि; Cg.k as in text (for हि). —For 26$^{cd}$, Ś1 Ñ V1 B D1.2.3-7 M3 subst. :

771* परिहासः कृतो ब्रह्मन्निवर्तस्व किमिच्छसि ।

[Ñ1 निवर्तेथ; D2 निवृत्तेन; D4 निवर्तेह; D5 निवर्तेत; D7 निवर्तेह (both sic); M3 निवृत्तेत (for निवर्तस्व).]

—then all the above MSS. cont. :

772* एतच्चैव सहस्रं ते गवां गोपैरहं सह ।
धनं ददामि भूयश्च यावदिच्छसि शाधि माम् ।
इत्युक्तस्त्रिजटो वने यजेयमिति राघव ।
तस्मै रामो ददौ द्रव्यं प्रभूतं यज्ञसिद्धये ॥

[D2 om. (hapl.?) up to इच्छसि in l. 2. —(l. 2) Ś1 D2 दास्यामि; Ñ2 B1.3 ददानि (for ददामि). Ñ1 V1 D1.4.5.7 M3 ददानि (Ñ1 °मि) भूयश्च धनं (by transp.) (for the prior half). —M3 om. from l. 3 up to the end of the sarga. —(l. 3) D2 वृद्धो (for वने). V1 अजेयम (metathesis) (for यजेयम्). B1 चैव (for इति). Ñ2 V1 B2.3 D1.2.3 राघवं.]

—thereafter Ñ2 B2.3 further cont. :

773* दशनिष्कसहस्रं तु रत्नानि विविधानि च ।
ददौ शुभानि वासांसि रामस्तद्यज्ञसिद्धये ॥

[(l. 1) B3 च (for तु).]

—while B2 cont. after 772* :

774* निष्काणां पञ्चसाहस्रं रत्नान्याभरणानि च ।
प्रीतो रामो ददौ तस्मै वासांसि विविधानि च ।

—whereas Dg1 Dt1 Dd1 Dm1 T G M1-3 ins. after 26 :

ततः सभार्यस्त्रिजटो महामुनि-
र्गवामनीकं प्रतिगृह्य मोदितः ।
यशोबलप्रीतिसुखोपबृंहिणी-
स्तदाशिषः प्रत्यवदन्महात्मनः ॥ २७

G. 2. 32. 46
B. 2. 32. 43
L. 2. 33. 46

इति श्रीरामायणे अयोध्याकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

775* इदं हि तेजस्तव यद्दुरत्ययं
तदेव जिज्ञासितुमिच्छता मया ।
इमं भवानर्थमभिप्रचोदितो
वृणीष्व किं चेदपरं व्यवस्यति ।
ब्रवीमि सत्येन न तेऽस्ति यन्त्रणा [5]
धनं हि यद्यन्मम विप्र कारणात् ।
भवत्सु सम्यक्प्रतिपादनेन त-
न्मयार्जितं प्रीतियशस्करं भवेत् ।

[(l. 2) M3 जिज्ञासितुम् (sic); Cv.r.m.g.t as above. —(l. 3) G2 M1.3 Ck इदं; Cm.g.t as above (for इमं). M2 अभिनोदितो (subm.). —(l. 4) Dt1 T G1.3 Ck.t व्यवस्यसि; Cm.g as above (for °ति). —(l. 5) T1 damaged from हि up to विप्रकार in l. 6. Dg1 Dt1 मम (for ऽस्ति). Dg1 वंचना (after corr. °णा); G3 Cr.k वंचिना (sic); Cv.m.g.t as above (for यन्त्रणा). —(l. 6) T2 G2 M1 वदन्यद् (for हि यद्यन्). —(l. 7) Dm1 प्रतिपादनेन. Dt1 Dd1 om. तन् (subm.). —(l. 8) Dm1 [म]र्जितं धनं (hypm.) (for [म]र्जितं). Dt1 नैव; Cv.m.g.k.t as above (for प्रीति-). Dm1 marg.: M3 भवत (sic) (for भवेत्).]

27 M4 om. 27 (cf. v.l. 26). —[a]) Ś1 Ñ V1 B D1.2.4–7 स ततः; G1 M2 स तत् (for ततः). B1 समार्थः B4 (before corr.) समार्यात; D4.7 समाज्य (for सभार्यस्). Ś1 Ñ V1 B D1.2.4–7 यशस्विना (D6 °स्वि)नो (for महामुनिर्). —[b]) Ś1 Ñ V1 B D1.2.4–7 प्रतिगृह्य (D5 °गृ [sic]) हृष्टः आप्य समुद्र (V1 सुहृद्‌, D6 प्रहृष्ट) मानसः. —[c]) T2 -सुखेन बृंहिणीस्; G1 -सुखोपबृंहिणस्; Cr -सुखोपबृंहणीस. —[d]) Dt1 Dd1 Dm1 तथाः; Cm.g.k.t as in text (for तद्). — T1 damaged from मनः up to यथा in l. 2 of 777*. G2 M1 महामुनिः; M2 महामनाः; Cg.t as in text (for महात्मनः). —For 27[cd], Ś1 Ñ V1 B D1.2.4–7 subst. :

776* प्रसन्न रामं मुदितो जगाम ह
प्रजासु रामस्य यशः प्रकाशयन् ।

[(l. 1) Ñ2 V1 B1 D2 प्रशस्य; D6 प्रविश्य; D7 प्रशीय (corrupt) (for प्रसन्न). V1 B4 रामो (for रामं). B4 मुदितं (for °तो). Ñ B1.4 om.; V1 B2 D4.5 स; B2 D1.2.5 न (for ह).]

—After 27, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

777* स चापि रामः प्रतिपूर्णपौरुषो
महद्धनं धर्मबलैरुपार्जितम् ।
नियोजयामास सुहृज्जने चिरा-
द्यथार्हसंमानवचःप्रचोदितः ।
द्विजः सुहृद्भृत्यजनोऽथवा तदा [5]
दरिद्रभिक्षाचरणश्च यो भवेत् ।
न तत्र कश्चिन्न बभूव तर्पितो
यथार्हसंमाननदानसंभ्रमैः ।

[T1 damaged up to यथा in l. 2. —(l. 1) G3 न (for स). Dd1 T2 M1–3 परि- (for प्रति-). Dg1 -मानसो (for -पौरुषो). —(l. 2) Dt1 Dd1 Dm1 महाधनं. —(l. 3) T2 निवेशयामास. G1 सुहृज्जनं. —(l. 4) T2 -प्रचोदितं; Cm.g.k.t as above. —(l. 5) Dg1 G3 तथा. —(l. 6) Cr दारिद्र्य-; Cm.g.k.t as above (for दरिद्र-). Dt1 T2 G M1 [ऽ]भवत् (for भवेत्). —(l. 8) T1 damaged from first य up to sarga no. in colophon of this sarga.]

Colophon. M4 om. (cf. v.l. 26). T1 damaged up to Sarga no. (cf. v.l. 777*). —*Sarga name* : Ś1 Ñ2 B D4.5.7 वि(D7 ॰)त्तविभजनं(D4 °जनो; D5 °जनं; D7 °जिनो); Ñ1 त्रिजटधनप्रदानो; V1 D2 धनप्रदानो; D1 धनदानो; D6 त्रिजटं प्रति रामवित्तविभाजनो. —*Sarga no.* (figures, words or both) : Ñ1 B1 D6 om. Ś1 D2 35; Ñ2 B2.4 31; V1 Dg1 Dt1 Dd1 Dm1 T (T1 damaged) G M1–3 32; B3 30; D1 88; D4.7 36; D5 39. —After colophon, D5 G M1.2 conclude with श्री(D5 om.)रामाय नमः; T2 श्रीरा॰चन्द्राय नमः.

## ३०

G. 2. 33. 1
B. 2. 33. 1
L. 2. 30. 1

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु ।
जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १
ततो गृहीते दुष्प्रेक्ष्ये *अशोभेतां तदायुधे ।
मालादामभिरासक्ते सीतया समलंकृते ॥ २
ततः प्रासादहर्म्याणि विमानशिखराणि च ।
अधिरुह्य जनः श्रीमानुदासीनो व्यलोकयत् ॥ ३
न हि रथ्याः स्म शक्यन्ते गन्तुं बहुजनाकुलाः ।
आरुह्य तस्मात्प्रासादान्दीनाः पश्यन्ति राघवम् ॥ ४
पदातिं वर्जितच्छत्रं रामं दृष्ट्वा तदा जनाः ।
ऊचुर्बहुविधा वाचः शोकोपहतचेतसः ॥ ५
यं यान्तमनुयाति स्म चतुरङ्गबलं महत् ।
तमेकं सीतया सार्धमनुयाति स्म लक्ष्मणः ॥ ६

## 30

☞ D5 missing for Sarga 30 ( cf. v.l. 2. 12. 12 ). M4 cont. the previous Sarga. Dm1 begins with 2ª.

1 ª) V1 D1.2.4 [ तु ]ऽथ; M4 तत् ( for तु ). V1 वरिवैदेह्या ( sic ). —ᵇ) Ś1 Ñ V1 B D1.2.4–7 M4 धनानि च:( V1 B4 D4 च ) ( for धनं बहु ). —ᶜ) Ś1 Ñ V1 B D1.2.4–7 M4 जग्मतु ( for जग्मतुः ). —ᵈ) B1 om. सीतया. Ś1 Ñ V1 B D1.2.4–7 M4 राघव:. —After 1, Ś1 Ñ V1 B D1.2.4–7 M4 ins.:

778* आयुधानि गृहीत्वाथो सर्वोपकरणानि च ।
लक्ष्मणेन सह भ्रात्रा तस्माद्विःसृत्य वेश्मनः ।

[ ( l. 1 ) Ñ1 [ अ ]थ ( for [ अ ]थो ). V1 D1.2.4–7 M4 गृह्यायुधानि सर्वाणि ( for the prior half ). —( l. 2 ) Ś1 D6 निष्क्रम्य; V1 M4 निर्गत्य; B4 निर्यान्त ( for निःसृत्य ).]

2 ªᵇ) Dg1 Dt1 Dd1 Dm1 T1.3 G M1–3 प्रेक्ष्याभ्यामशोभेतां; T2 दुष्प्रेक्ष्ये व्यशोभेतां ( for दुष्प्रेक्ष्ये *अशोभेतां ). —ᶜ) G1 M3 आबद्धे ( for आसक्ते ). —ᵈ) T1 damaged from तया up to 3ᵇ. —For 2, Ś1 Ñ V1 B D1.2.4–7 M4 subst.:

779* तौ गृहीतायुधौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
राजमार्गं समेयातां सीतयानुगतौ तदा ।

[ ( l. 1 ) Ś1 B4 D6 गृहीतायुधौ; D6 गृहीतायुधे ( for °तायुधौ ). M4 तौ गृहीतायुधवरौ ( for the prior half ). —( l. 2 ) V1 B4 राजमार्गे. Ś1 समीयातां; V1 D1.2.4.5.7 M4 समायातौ ( V1 D1.2 °तां )तौ. V1 तथा ( for तदा ).]

3 T1 damaged up to 3ªᵇ ( cf. v.l. 2 ). —ª) G3 M1 तदा ( for ततः ). Dt1 प्रसाद-. —ᶜ) Dt1 Dm1 T1.2 अधिरुह्य; D6 अभ्यारोहन ( for अधिरुह्य ). Ñ1 नराः श्रीमत्- ( for जनः श्रीमान् ). —ᵈ) Ñ1 D4.5.7 पौरजानपदा( D5 °द )स्तदा( Ñ1 °दा नराः; D4 °दास्तथा ). —For 3, Ś1 Ñ2 V1 B D1.2.4 M4 subst., Ñ1 D4.5.7 subst. l. 1 only for 3ªᵇ:

780* ततः स्ववेश्मशृङ्गाणि हर्म्याणि च समन्ततः ।
दद्दृशुस्तांस्तदारुह्य पौरजानपदस्त्रियः ।

[ ( l. 1 ) Ś1 Ñ1 B3 D6 च; Ñ2 तु; B4 M4 स-; D4.5.7 तु ( for स्व- ). —( l. 2 ) Ś1 D6 तौ; Ñ2 तान्; V1 D1.2 च; M4 तु ( for तांस् ). V1 D2 M4 [ अ ]भिवीक्षन्त( M4 °न्ते ); B4 तदा

रामं च; D1 [ अ ]वलोकन्ती ( for तदारुह्य ). D1.2 °जानपदाः स्त्रिय: ( for the post. half ).]

4 ª) Dg1 Dd1 Dm1 D6 M3 रथ्यासु ( Dg1 [ before corr. ] °थ्यु ). D4.7 रथ्याश्च ( for रथ्याः स्म ). Ñ1 Dt1 सुशक्यंते ( for स्म श° ). —ᵇ) Ñ1 D4.5.7 बहुजनाकुला:; Dm1 °कुले ( for बहुजनाकुलाः ). —ᶜ) Dg1 Dt1 Dd1 Dm1 T1 G3 M2.3 Cm.k.t प्रासादाद्. Ñ1 D4.5.7 प्रासादानधिरुह्य. ※ Cm : आरुह्य प्रासादानारुह्य प्रासादात्प्रासादारोहणरूपोपायादेव पश्यन्ति । प्रासादानिति वा पाठ: ॥ Cg : प्रासादानिति पाठः । प्रासादादिति पाठे ल्यब्लोपे पञ्चमी द्रष्टव्या । ※ —ᵈ) Ñ1 ( *int. lin.* also ) भवंति; D4.5.7 प्रेक्षंति ( for पश्यन्ति ). —For 4, Ś1 Ñ2 V1 B D1.2.6 M4 subst.:

781* अन्तरं राजमार्गे च नासीज्जनपदाकुले ।
तदानुरागात्प्रस्थाने रामस्यामिततेजसः ।

[ ( l. 1 ) V1 अंतरं ( hypm. ). B1 राजमार्गेषु. B3 M4 जनपदाकुले. B1 नासीत् जनसंपदा ( for the post. half ). —After l. 1, B3 ins.:

781(A)* किं करिष्यति वै राजा वृद्धश्च कैकयीवशः ।

—( l. 2 ) Ś1 D6 तदानुरागेऽसौ; V1 D1.2 M4 रामानुरागात्; B4 तस्य° ( for तदानुरागात् ).]

5 ª) Dt1 सानुजं दृष्ट्वा ( for वर्जितच्छत्रं ). —ᵇ) Dt1 ससीतं च; T1.2 G3 दृष्ट्वा रामं ( by transp. ) ( for रामं दृष्ट्वा ). Ñ1 Dt1 D4.5.7 T G M1–3 जनास्तदा( D4 [ before corr. ] °नाकुल: ) ( by transp.); Dg1 तथा जनाः ( for तदा जनाः ). —T1 damaged from विधा in 5ᶜ up to 6ᵇ. —ᶜ) Ñ1 बहुविधाः; Dt1 °जना ( for बहुविधा ). —ᵈ) Ñ1 D4.5.7 दुःखोपहत- ( for शोको° ). —For 5, Ś1 Ñ2 V1 B D1.2.6 M4 subst.:

782* पदातिनं समायान्तं समार्यं सहलक्ष्मणम् ।
ऊचुर्दृष्ट्वा बहुविधा वाचो दुःखसमन्विताः ।

[ ( l. 1 ) Ś1 D6 पदातिं तं; D2 पदातिनम्. Ś1 B3 D6 समायातं; V1 D1.2 स( D2 च ) गच्छंतं ( for समायान्तं ). M4 पदाति तथ गच्छंत ( for the prior half ). D2 M4 ससीतं ( for समार्यं ). V1 D1 स सीता( D1 °ते ) सलक्ष्मणे ( for the post. half ).]

6 T1 damaged up to ªᵇ ( cf. v.l. 5 ). —ª) Ś1 Ñ2 B2.3 D6 अनुप्रयाति तं( Ñ2 ते ) यां( Ś1 D6 या )तं: V1

ऐश्वर्यस्य रसज्ञः सन्कामिनां चैव कामदः ।
नेच्छत्येवानृतं कर्तुं पितरं धर्मगौरवात् ॥ ७
या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ।
तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ॥ ८
अङ्गरागोचितां सीतां रक्तचन्दनसेविनीम् ।
वर्षमुष्णं च शीतं च नेष्यत्याशु विवर्णताम् ॥ ९

अद्य नूनं दशरथः सत्त्वमाविश्य भाषते ।
न हि राजा प्रियं पुत्रं विवासयितुमर्हति ॥ १०
निर्गुणस्यापि पुत्रस्य कथं स्याद्विप्रवासनम् ।
किं पुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ॥ ११
आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः ।
राघवं शोभयन्त्येते षड्गुणाः पुरुषोत्तमम् ॥ १२

G. 2. 33. 14
B. 2. 33. 12
L. 2. 36. 14

B1 D1.2 M4 अनुया( V1 °यां )ति प्रयांतं यं; B4 अनुयाति च यं यांतं. —ᵇ) Ś1 Ñ1 V1 B1-3 D1.2.4.6.7 चतुरंगो मह( V1 °बल )द्बलं; Ñ2 B4 D5 चतुरंगमहद्बलं. —ᶜ) Ś1 Ñ2 V1 B D1.2.4-7 M4 इमं; Ñ1 एनं; T2 G2 M2 मृक्; M3 एवं; Cg as in text ( for मृकं ). —ᵈ) Ś1 Ñ V1 B D1.2.4.6.7 M4 अनुगच्छति; Dg1 °यातं स-; D5 °यांति स ( sic ); G1 °ति स ( for अनुयाति स्म ). Dg1 D5 लक्ष्मणं.

7 ᵇ) Dt1 Dd1 Dm1 Ct कामानां; Cg as in text ( for कामिनां ). Dt1 चाकरो महान् ( for चैव कामदः ). —ᶜ) Dm1 नेच्छति ( sic ). —ᵈ) Dt1 Dd1 Dm1 G2 M1.2 Cmp.k.t वचनं; Cm as in text ( for पितरं ). —For 7, Ś1 Ñ V1 B D1.2.4-7 M4 subst. :

783* सुखैश्वर्यरसज्ञोऽपि शक्तिमानपि वीर्यवान् ।
अनृतं पितरं कर्तुं धर्मात्मा नायमिच्छति ।

[ (l. 1) Ñ B1.2 D4.6.7 हि ( for ऽपि ). Ś1 B2.3 D5 भक्तिमान्; D2 बुद्धि° ( for शक्तिमान् ). Ś1 अति- ( for अपि ). —(l. 2) V1 अनूर्ण; D1 नानृतं ( for अनृतं ). —After पितरं, D4 wrongly repeats from सीतया in 6ᶜ up to अनृतं पितरं. V1 D5 धर्मात्मानं प्रय( D5 यांतं )च्छति; D1 धर्मात्मा नावगच्छति ( for the post. half ). ]

8 ᵃ) Ś1 या न शक्ताः; V1 °क्याः; B3.4 यामशक्या( B4 °क्यां ); D4 न शक्या याः; M4 यो न शक्यः ( for या न शक्या ). —After या न, D5 erroneously repeats from शक्तिमान् in l. 1 of 783* up to या न. —ᵇ) Ś1 Ñ B D6 देवैर् ( for भूतैर् ). B2 वने ( for अपि ). M4 सीतया सह राघवः. —T1 damaged from सीतां in 8ᵈ up to वर्षमु in 9ᵈ. —ᶜ) Ś1 Ñ B D6 सीतां( B4 [ before corr. ] सीतां ) तामपि( Ś1 D6 °द्य ) ( for तामद्य सीतां ). B4 ( m. also ) गच्छंति ( for पश्यन्ति ). —ᵈ) Dd1 D5 -गतां ( for -गता ). Ś1 Ñ V1 B D1.2.5.6 M4 राजमार्गे पृथग्( D5 स्थिता )जनाः.

9 T1 damaged up to वर्षमु in ᵈ ( cf. v.l. 8 ). —ᵃᵇ) T2 -रागोचितां. Ś1 Ñ V1 B D1.2.4-7 M4 सहजेनांगरागेण भूषितां वरवर्णिनीं. —ᶜᵈ) D4.7 वनेष्वस्या ( for च शीतं च ). D5 वर्षे उष्णे च शीते च ( for ᶜ ). Dg1 नयंति; D4.7 सुखस्य; T1 G1.3 नेष्यंति; T2 सेत्स्यंति ( for नेष्यति ). Ś1 Ñ V1 B D1.2.6 M4 विवर्णतां( D2 °र्णं च ) नयिष्यंति सीतां शीतोष्णमारुताः. —After 9, D4.7 ins. :

784* शोभां चैव करिष्यन्ति चन्द्रस्येव नभोङ्गणे ।

[ D7 नभोगते ( for नभोङ्गणे ). ]

10 ᵃ) T G2 सत्यम्; Cv.r.m.g.t as in text ( for सत्त्वम् ). T2 आश्रित्य; Cr.m.g.t as in text ( for आविश्य ). —ᶜ) G2 M1 स; Cr as in text ( for न ). —ᵈ) T1.2 G2.3 M1 इच्छति; Ct अर्हति ( as in text ). —For 10, Ś1 Ñ V1 B D1.2.4-7 M4 subst. :

785* नूनं दशरथोऽन्येन सत्त्वेनाविष्टचेतनः ।
यथा विवासयत्यद्य प्रियं पुत्रमकारणे ।

[ (l. 1) D6 नक्तं ( for नूनं ). V1 D1.2 मन्ये ( for ऽन्येन ). D4.7 नक्तं द्य दशरथो( D7 दशरथो द्य [ by transp. ] ) ( for the prior half ). Ś1 D4.6.7 भूतेन ( for सत्त्वेन ). —(l. 2) Ś1 D6 विवासयेद्. B2 [ अ ]थ ( for [ अ ]द्य ). Ś1 D2.6 अकारणे. ]
—Thereafter all ( except D5 M4 ) cont. :

786* यदि हि स्यादनाविष्टः सत्त्वेनान्येन केनचित् ।
कथं विवासयेद्रामकस्माद्गुणसागरम् ।

[ (l. 1) B4 यदा. V1 D1.2 न ( for हि ). Ñ1 D7 स्यान्हि( Ñ1 °हि )ह ( sic ); V1 अनाकृष्टः. D4.7 [ अ ]नेन ( for [ अ ]न्येन ). Ñ2 V1 D1.2.4.7 कथंचित्. —(l. 2) V1 D1.2.4.7 न वै; B2 ( m. also ) कस्मात् ( for कथं ). B4 स कस्माद् ( for अकस्माद् ). Ñ1 D4.7 गुणिनं सुतं. ]

11 ᵇ) Dt1 विनिवासनं. —For 11, Ś1 Ñ V1 B D1.2.4-7 M4 subst. :

787* को ह्यार्यो निर्गुणमपि त्यजेत्पुत्रं सचेतनः ।
किमु यस्य गुणैः कृत्स्नो लोकोऽयमनुरञ्जितः ।

[ D5 M4 om. l. 1. —(l. 1) Ñ1 को ह्यार्यान्; V1 D1.2 ह्यार्यो; D4.7 को हि जानन् ( hypm. ) ( for को ह्यार्यो ). Ñ1 D4.7 त्यजेत् ( for त्यजेत् ). Ś1 Ñ B4 अचेतनः; V1 D1.2 अकारणे; B2 समचेतनः ( hypm. ) ( for सचेतनः ). —(l. 2) Ñ2 V1 किं वा यस्य; D1.2 यस्यास्य; D4.7 किं तु यस्य ( for किमु यस्य ). Ś1 D5 गुणैर्; Ñ1 V1 कृत्स्न-; D5 कृत्ो ( for कृत्स्नो ). ]

12 ᵃ) B2 D5 अनृशंसं; Dt1 Dm1 D5 अनृशंस्यम्; D4 आनुक्रोश्यम्; M4 आनुशस्य-. Ś1 Ñ2 V1 B D1.2.6 M4 क्षमा शीलं( M4 °ल- ); D4.7 अनुक्रोशं ( for अनुक्रोशः ). —ᵇ) Dt1 शील-. Ś1 Ñ2 B1.3 D1.2.6 श्रुतं सत्यं पराक्रमः( D1.2 °मे ); Ñ1 शीलं सत्यं यशो दमः; V1 B2.4 श्रुतं सत्यपराक्रमं( B2 [ marg. also ] °समाश्रये ); D4.5.7 श्रुतं शीलं यशो दमः; M4

G. 2. 33. 15
B. 2. 33. 13
L. 2. 30. 13

तस्मात्तस्योपघातेन प्रजाः परमपीडिताः ।
औदकानीव सत्त्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३
पीडया पीडितं सर्वं जगदस्य जगत्पतेः ।
मूलस्येवोपघातेन वृक्षः पुष्पफलोपगः ॥ १४
ते लक्ष्मण इव क्षिप्रं सपत्न्यः सहबान्धवाः ।
गच्छन्तमनुगच्छामो येन गच्छति राघवः ॥ १५
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ।
एकदुःखसुखा राममनुगच्छाम धार्मिकम् ॥ १६
समुद्धृतनिधानानि परिध्वस्ताजिराणि च ।
उपात्तधनधान्यानि हृतसाराणि सर्वशः ॥ १७

-श्रुतसत्त्वपराक्रमाः ( before corr. °यशः ). —ᵈ ) Dt1 Dd1 Dm1 पुरुषर्षभ. —For 12ᶜᵈ, Ś1 Ñ V1 B D1.2.4-7 M4 subst. :

788* शोभयन्ति गुणा रामेते पद प्रथिता भुवि ।

[ Ś1 B2 D6 ऽते स-; Ñ1 B4 ष्वेषु; Ñ2 यते स-; D1 ने न पद ; D2 तेन पद ( for यते पद ). V1 पद सर्विता; L( ed. ) गुणान्विता ( for पद प्रथिता ). ]

13 ᵃ ) G2 [ उ ]पघातेन ( for [ उ ]पघातेन ). Ñ1 D6 विवासनाच्च तस्याथ; D2.7 विवासेनापि तस्याथ. —ᵇ ) Ñ1 D2.4.7 समभि( D7 °वि )पीडिताः. —For 13ᵃᵇ, Ś1 Ñ2 V1 B D1.2.6 M4 subst. :

789* विवासेनास्य तेनार्य दुःखितोऽस्य महाजनः ।

[ Ś1 B4 D1 M4 [ अ ]य ( for [ अ ]स्य ). D1 M4 तस्य ( for तेन ). Ś1 [ अ ]त्य; D6 [ अ ]य ( for [ अ ]र्य ). V1 विवासनेन तस्याथ; D2 विवासनात्तस्यार्य तु ( for the prior half ). V1 D1.2 M4 तु; B2 *sup. lin.* ( for स्य ).]

—ᶜ ) D7 उदकानि ( for औद° ). B4 G2 च ( for [ इ ]व ). —ᵈ ) Dg1 illeg. for ग्रीष्मे. Ś1 Ñ2 V1 B D1.2.6 M4 सलिलस्य परिक्षयात् ( B4 °क्षये ).

14 ᵃ ) Dg1 जगदथ. —ᵇ ) Dg1 Dm1 D4.5.7 T2 G1.2 M3 [ ष् ]ब; Cg as in text ( for [ इ ]व ). —ᶜ ) Dt1 G2 M3 वृक्षाः. D6 वृक्षपुष्पैः. Dm1 G2 M3 -फलोपगाः. —For 14, Ś1 Ñ2 V1 B D1.2.6 M4 subst.; Ñ1 ins. l. 2 and l. 4 after 14ᵃᵇ and 791* respy.; D4.5.7 ins. l. 2 only after 14ᵃᵇ :

790* लोकनाथस्य रामस्य पीडया पीडितं जगत् ।
अपर्वणीव सोमस्य राहुग्रहणपीडया ।
परेहलोकदानानां परित्राता सुखस्य च ।
तथाभयप्रदानस्य दाता गच्छति नो वनम् ।

[ ( l. 1 ) D6 पीडितं पीडया ( by transp. ). —( l. 2 ) D4.7 राहोर्, Ś1 B2 D6 -ग्रासे-; D2 -ग्रस- ( for -ग्रहण- ). V1 -पीडना ( for -पीडया ). —After l. 2, D4.5.7 ins. :

790(A)* सर्वे निराकृतायापि च( D5 त )था बन्धुपूजिताः ।

—( l. 3 ) B2 प्रदाता; B4 परित्राता ( for परेह- ). Ś1 D6 परलोक-प्रदानानां; V1 सर्वं दाता पुरो( रो )गानां; B1 ( m. also परोहलोकदानानां ) सर्वं स दाता भोगानां; D1.2 भोगदानभोगानां; M4 परिदाता च भोगानां ( for the prior half ). Ś1 B1.4 D6 परित्राण-; V1 D1.2 °दाता ( for परित्राता ). —( l. 4 ) D2 वनं ( sic ) ( for वनम् ).]

—After 14, Ñ1 Dg1 Dt1 Dd1 Dm1 D4.5.7 T G M1-3 ins. :

791* मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः ।
पुष्पं फलं च पत्रं च शाखाश्चास्येतरे जनाः ।

[ ( l. 1 ) D4 स्वयं; D5.7 बभौ ( for ह्येष ). Ñ1 महामतिः. —( l. 2 ) Ñ1 D6 फलं पत्रं च पुष्पं च; D5.7 फलं पुष्पं च पत्रं च ( all by transp. ); M3 पुष्पं च फलकं च ( for the prior half ). Dg1 [ अ ]स्य ( sic ) ( for [ अ ]स्य ). Ñ1 D6 [ अ ]परे; D5.7 [ अ ]न्ये; M3 [ इ ]तरे ( for [ इ ]तरे ). Ñ1 D6 M3 नराः. ]
—Thereafter Ñ1 cont. l. 4 of 790*.

15 ᵇ ) D4.5.7 सामात्याः सह बान्धवैः; T2 G1 M2 सपत्नीकाः सबान्धवाः. —For 15, Ś1 Ñ V1 B D1.2.6 M4 subst.; D5.7 ins. l. 2–3 only after 15 :

792* साधु लक्ष्मणवत्सर्वे त्यक्तभोगपरिग्रहाः ।
राममेवानुगच्छामः किं नो दारैर्धनेन वा ।
सपुत्रपत्नदारा वा सपशुद्रव्यसंचयाः ।
गच्छामस्तत्र यत्रायं साधु गच्छति राघवः ।

[ ( l. 1 ) V1 लक्ष्मण सर्वे. B1 पुत्र- ( for लक्ष्म- ). M4 -भोग- ( for -भोग ). B1 -परिच्छदाः. V1 D1.2 त्यक्त्वा भोग( V1 °गं ) परिग्रहान्( V1 °ह ) ( for the post. half ). —M4 om. from l. 2 up to l. 1 of 793*. —( l. 2 ) Ś1 B1 दारैर् ( for दारैर् ). B1 धनैर ( for धनेन ). Ś1 B1 न ( for वा ); D2 किं दारैः किं धनेन च ( for the post. half ). —( l. 3 ) D2 -पुत्र- ( for -पत्न- ). Ś1 -दारा( metathesis ); Ñ1 -दारै( for -दारा ). Ś1 D6-7 न ( for वा ). B4 -सद्राण( metathesis ). Ś1 सपुत्र; Ñ1 सह स- ( for सपशु- ). D1 -संचयान्. —( l. 4 ) V1 D1.2 वयं गच्छामहे साधु ( for the prior half ). V1 D1.2 यत्र; G( ed. ) साधुर् ( for साधु ).]

16 ᵃ ) M3 -गता ( for -सुखा ). —ᵈ ) Dd1 G1.2 M1 Ck राघवं. —For 16, Ś1 Ñ V1 B D1.2.4-7 M4 subst. :

793* विहारोद्यानशयनशरणासनवाहनम् ।
परित्यज्यानुगच्छामस्तुल्यदुःखा नृपात्मजम् ।

[ M4 om. l. 1 ( cf. v.l. 792* ). —( l. 1 ) Ś1 Ñ1 V1 B4 D6 -शयनं; B2 -शरण- ( for -शयन- ). Ś1 D6 शयनासन-; B2 -शयनासन-; B4 शयनासन- ( sic ); D4.7 -शयनासन-; D2 -शयनासन- ( for -शरणासन- ). —( l. 2 ) B2 परित्यक्ता; D6 परित्यज्य, B1 तु; D6 [ अ ]य ( for [ अ ]नु- ). D4.5.7 -भोगा; M4 -दीना ( for -दुःखा ). D1 नृपात्मजे. ]

17 ᵃ ) Ñ1 समुद्धित-; Dg1 समुद्धृत्य; D6 समुद्धृतो ( for

रजसाभ्यवकीर्णानि परित्यक्तानि दैवतैः ।
अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम् ॥ १८
वनं नगरमेवास्तु येन गच्छति राघवः ।
अस्माभिश्च परित्यक्तं पुरं संपद्यतां वनम् ॥ १९

बिलानि दंष्ट्रिणः सर्वे सानूनि मृगपक्षिणः ।
अस्मत्त्यक्तं प्रपद्यन्तां सेव्यमानं त्यजन्तु च ॥ २०
इत्येवं विविधा वाचो नानाजनसमीरिताः ।
शुश्राव रामः श्रुत्वा च न विचक्रेऽस्य मानसम् ॥ २१

G. 2. 33. 20
B. 2. 33. 26
L. 2. 36. 29

समुद्धृत-). Ñ1 -शयानानि (sic); B1 -विधानानि (for -निधानानि). V1 समुद्धृतानि धान्यानि; B4 समुद्धृतेनिधानानि; D1 समुद्धतानि ध्यानानि (both sic). —$^{b}$) Ś1 Ñ B D4-7 शी(B2 व)र्णध्वस्तो(D2 °स्तो)पधानि च; V1 D1.2 शीर्णध्वज (D1 °ध्वजः D2 °ध्वज)ध्वजानि च; M4 शीर्णवस्त्रोपधानि च. —$^{c}$) Dg1 reads -धन- *inf. lin.* —For 17$^{cd}$, Ś1 Ñ V1 B D1.2.4-7 M4 subst.:

794* प्रक्षीणधान्यकोषाणि हीनसंमार्जनानि च ।

[Ś1 Ñ1 V1 D4.5.7 प्रक्षीणे-, Ñ1 D4.5.7 -धनधान्य(Ñ1 °धान्य)नि (for -धान्यकोषाणि).]

—Thereafter Ś1 Ñ1 V1 B1.2.4 D1.2.3-7 M4 cont.; Ñ2 B3 cont. after 796*:

795* पिशाचप्रेतरक्षोभिर्जुष्टान्युच्छिष्टभोजनैः ।

[Ñ1 विष्टानि; B4 दुष्टानि (for जुष्टानि). Ś1 [उ]च्छिष्ट-; D1 [ब]च्छिष्ट- (corrupt) (for [उ]च्छिष्ट-).]

18 D4 om. 18$^{ab}$. —$^{a}$) T2 G2 M1 व्यवकीर्णानि; M2 [अ]प्यवकीर्णानि (for [अ]भ्य°). Ś1 Ñ1 V1 B1.2.4 D1.2.6-7 अलक्ष्मीण्य(Ś1 Ñ1 D4.5 °न्य; B4 °न)मनोज्ञानि; B3 रजसाभ्यवकीर्णानि; M4 अलक्ष्मीभवनानीव. —After 18$^{a}$, Ñ2 B3 ins.:

796* विनिर्लिप्तान्यदीपत: ।
नकुलोलूकमार्जारदवमूषिकसंकुलानि च ।
अपेतधर्मकुल्यानि क्रियाभिर्वर्जितानि च ।

Thereafter cont. 795* and repeat 18$^{a}$ as in Ś1.
—$^{b}$) V1 च क्रिया; D1.2 M4 च क्रियाः; D6 देवतैः (for दैवतैः).
—After 18$^{ab}$, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins.:

797* मूषिकैः परिधावद्भिरुद्बिलैरावृतानि च ।
अपेतोदकधूमानि हीनसंमार्जनानि च ।
प्रणष्टबलिकर्मेज्यामन्त्रहोमजपानि च ।
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च ।

[(l. 1) Dg1 Dt1 Dd1 Dm1 मूषिकै:. T2 उद्बिलैः कृतानि च (sic) (for the post. half). —(l. 2) Post. half=post. half of 794*. T2 -संमार्जित च. —(l. 4) Dm1 T2 G1.2 M2 [य]व (for [इ]व).]

—$^{cd}$) D2 वेश्मानि (for वेश्मानि). B(ed.) कैकेयी वेश्मानि (by transp.). T2 प्रत्यपद्यतां.

19 D4 om. 19. —$^{b}$) Ś1 Ñ B D4.6.7 यत्र (for येन).
—For 19$^{cd}$, V1 D1.2 M4 subst.; Ś1 Ñ B D6 ins. after 19:

798* यत्र वत्स्यति रामोऽयं पुरं तत्र भविष्यति ।

[D1 [अ]सौ रामो (for रामोऽयं). Ñ1 पुरी; B2 पुर (sic) (for पुरं).]

—$^{c}$) Ś1 D4.6.7 M3 अस्माभिस्तु; Ñ V1 B D1.2 M4 अरण्यतां (for अस्माभिश्च). —$^{d}$) Dm1 G1.2 संपाद्यतां; D7 संपद्यती (sic). Ñ B अस्माभि(B1 °भिः)र्वाप्य(B1.3 °पि)दं पुरं; V1 D1.2 यावदस्माभिरिदं पुरं; M4 यावदस्माभिरिदं पुरं.

20 $^{a}$) Ś1 Ñ V1 B D1.2.4-7 M4 सर्पा (for सर्वे). —T2 om. (hapl.) from 20$^{a}$ up to सर्वे in l. 3 of 800*. —$^{b}$) Ś1 Ñ V1 B1-3 D1.2.6 M4 वनानि मृग-; B4 व∗∗∗∗म- (for सानूनि मृग-). D4 तथा सानूनि पक्षिणः. —After 20$^{ab}$, Dg1 Dt1 Dd1 Dm1 D4.5.7 T (T2 om.) G M1-3 ins.; V1 D1.2 M4 subst. for 20$^{cd}$:

799* त्यजन्त्वस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ।

[Dg1 D1.2 G2 M4 त्यजन्ति. V1 D1.2 M4 भये (for भीता). D4.5.7 G2 M3 च (for [अ]पि). V1 D1.2 M4 रामस्य वसतो वने (for the post. half).]

—$^{c}$) Dt1 Dd1 Dm1 G1 M2 प्रपद्यंतु. —$^{d}$) B1 तैः; G1 वा (for च). —After 20, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins.:

800* तृणमांसफलादानां देशं व्यालमृगद्विजम् ।
प्रपद्यतां हि कैकेयी सपुत्रा सह बान्धवैः ।
राघवेण वने सर्वे वयं वत्स्याम निर्वृताः ।

[T2 om. up to सर्वे in l. 3. —(l. 1) T1 damaged for तृ in तृण-. Dt1 Dd1 Dm1 G1 Ct -फलादानं; Cv.r.m.g as above (for -फलादानां). G2.3 M1.2 देशान्, M2 व्याल- (for व्याल-). G2.3 M1.2 -द्विजान्; Cv.m.g.t as above (for -द्विजम्). ※ Cm.: तृणमांसफलादानामप्युव्यालमृगद्विजानिति पाठे तृणमांसफलानां भावानं तेभ्यो वनदेशेभ्यः ते तथा। पशुव्यालमृगद्विजान् पशवश्च ये तु ते तथोक्ताः ※ —(l. 2) Dg1 प्रपद्यंतां. G1 M2 सपुत्राः स बांधवाः (for the post. half). —(l. 3) Dt1 Dd1 Dm1 transp. वने and वयं. Dg1 M2 सह; T2 वनं (for वने). G1 वत्स्यामि (sic).]

21 $^{a}$) Dg1 reads वाचो in marg. —$^{c}$) Dt1 Dd1 Dm1 राघवः श्रुत्वा (for रामः श्रुत्वा च). —$^{d}$) G2 मानसः (sic). —For 21, Ś1 Ñ V1 B D1.2.4-7 M4 subst.:

801* एताश्चान्याश्च विविधा वाचः पौरजनेरिताः ।
शृण्वन्नामो ययौ मार्गं वनवासकृतोद्यमः ।

[(l. 1) B4 विविधान् (sic). V1 अन्याश्च विविधा वाचस् (for the prior half). V1 तथा (for वाचः). D7 [इ]रितं (sic). —(l. 2) B4 श्रुत्वा (sic). D1 मार्गे. V1 कृतोद्यमं; M4 -कृतक्षणः.]

G. 2. 33. 27
B. 2. 33. 29
L. 2. 36. 27

प्रतीक्षमाणोऽभिजनं तदार्त-
मनार्तरूपः प्रहसन्निवाथ ।
जगाम रामः पितरं दिदृक्षुः
पितुर्निदेशं विधिवच्चिकीर्षुः ॥ २२
तत्पूर्वमैक्ष्वाकसुतो महात्मा
रामो गमिष्यन्वनमार्तरूपम् ।
व्यतिष्ठत प्रेक्ष्य तदा सुमन्त्रं
पितुर्महात्मा प्रतिहारणार्थम् ॥ २३
पितुर्निदेशेन तु धर्मवत्सलो
वनप्रवेशे कृतबुद्धिनिश्चयः ।
स राघवः प्रेक्ष्य सुमन्त्रमब्रवी-
न्निवेदयस्वागमनं नृपाय मे ॥ २४

इति श्रीरामायणे अयोध्याकाण्डे त्रिंशः सर्गः ॥ ३० ॥

—After 21, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.:

802* स तु वेश्म पितुर्दूरात्कैलासशिखरप्रभम् ।
अभिचक्राम धर्मात्मा मत्तमातंगविक्रमः ।
विनीतवीरपुरुषं प्रविश्य तु नृपालयम् ।
ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ।

[ (l. 1) Dt1 Ct पुनर्दूराद्; T2 M3 पुनर्दूरात् (for पितुर्दूरात्). G2 M1 -सदृश- (for -शिखर-). —(l. 3) T1.2 G1.2 M1.2 -धीर- (for -वीर-). T3 G3 M3 स( T3 सं ) प्रविश्य (for प्रविश्य तु). —(l. 4) Dd1 [अ]वस्थित-. T3 G3 M3 दृष्ट्वा; M2 धीरं (for दीनं).]

22 ^a) Ś1 Ñ B2.3 M1 अवेक्षमाणो; B1.2 D1.2.4–7 अवेक्ष्यमाणो; Dg1 प्रतीक्ष्यमाणो. Ś1 Ñ B D1.2.4–7 M4 [ऽ]पि; Dg1 T1.2 G1.2 हि; M2 वि-; Ct as in text (for ऽभि-). V1 अवेक्ष्यमाणो जनसंघम्. Ś1 तदार्तमनार्तरूपः; Ñ1 तथार्तं जना°; V1 आर्तं तमार्तरूपः; B4 * * * * मार्तं° (damaged); D1 तमार्तं तथार्तं°; D2 तमार्तमनार्तं°; D4.7 M3 तथार्तमनार्तं°; D5 तमार्तं जनार्तं° (for तदार्तमनार्तरूपः). B1 प्र * मन्; D4.7 प्रशमन् (for प्रहसन्). Ñ1 V1 B2 D1.2.4.5.7 M4 [अ]तः; Ñ2 B1.3.4 [अ]तं (for [अ]थ). —^c) B1 संहृष्टो (for पितरं). —^d) Dm1 निवेशं; Cm.k as in text (for निदेशं). Ś1 V1 B D1.2.4–7 M4 सत्यप्रतिज्ञं नृपतिं( Ś1 V1 D2.6 M4 पितरं; D4.7 च तथा; D5 हि तथा) चिकीर्षुः.

23 ^a) T3 सर्वम् (for पूर्वम्). Dg1 (before corr.) G3 M2.3 ऐक्ष्वाकु-. —^b) Dt1 Dm1 नृपम्; Cr as in text (for वनम्). Dg1 आर्तिरूपं. —^c) Ck प्रेक्ष्य; Cv.r.m. as in text (for प्रेक्ष्य). —For 23, Ś1 Ñ V1 B D1.2.4–7 M4 subst.:

803* आसाद्य चेक्ष्वाकुकुलप्रदीपो
रामः पितुर्वेश्म तदार्यवृत्तः ।
व्यतिष्ठत प्रेक्ष्य ततो नियोगे
स्थितं सुमन्त्रं प्रतिहारमिष्टम् ।

[ (l. 1) B1 आसाद्य ( for आसाद्य च ). D4 ( with hiatus ) आसाद्य इक्ष्वाकु-. Ñ B -प्रमतो ( for -प्रदीपो ). —(l. 2) Ś1 D6 तथा ( for तदा ). B1 [आ]र्यपुत्रः. —(l. 3) D2 ( before corr. ) प्रतिष्ठत ( for व्य° ). Ñ1 तदा नियोगे; V1 D1.2 पितुर्नियोगात्; D6 °योगः; M4 पितुर्नि° ( for ततो नियोगे ). D4.5.7 व्यतिष्ठत( D6 °ता )सावनृपं महात्मा. —(l. 4) M4 स्थितः. D4.5.7 रामः सतीतः सा सुमन्त्रम्.]

24 Ś1 Ñ V1 B D1.2.4–7 M4 om. 24. —^a) Dg1 M2 निदेशं स ( for निदेशेन ). M3 हि ( for तु ). —^b) Dt1 वने (sic). Dd1 प्रदेशे ( for प्रवेशे ). —^c) G3 सु- ( for स ).

Colophon. —*Sarga name*: Ś1 D4.5.7 पौरवाक्यं; Ñ2 B1.3.4 उदासीन( B4 °नं )वाक्यं; Ñ1 उदासीनजनवाक्यं; V1 रामगुणवर्णनं; B2 अयोध्याजनवाक्यं; D1.2 गुणवर्णनं; D6 लोकानामुदासीनादिवाक्यं. —*Sarga no.* ( figures, words or both ): Ñ1 D6 om. Ś1 D2 36; Ñ2 B 32; V1 34; Dg1 Dt1 Dd1 Dm1 S 33; D1 89; D4.7 37; D5 40. —After colophon, D5 concludes with रामाय नमः; T3 श्रीरामचन्द्राय नमः; G M1.2 श्रीरामाय नमः.

# ३१

स रामप्रेषितः क्षिप्रं संतापकलुषेन्द्रियः ।
प्रविश्य नृपतिं सूतो निःश्वसन्तं ददर्श ह ॥ १
आलोक्य तु महाप्राज्ञः परमाकुलचेतसम् ।
राममेवानुशोचन्तं सूतः प्राञ्जलिरासदत् ॥ २
अयं स पुरुषव्याघ्र द्वारि तिष्ठति ते सुतः ।
ब्राह्मणेभ्यो धनं दत्त्वा सर्वं चैवोपजीविनाम् ॥ ३
स त्वा पश्यतु भद्रं ते रामः सत्यपराक्रमः ।
सर्वान्सुहृद आपृच्छ्य त्वामिदानीं दिदृक्षते ॥ ४
गमिष्यति महारण्यं तं पश्य जगतीपते ।
वृतं राजगुणैः सर्वैरादित्यमिव रश्मिभिः ॥ ५

G. 2. 35. 4
B. 2. 34. 8
L. 2. 35. 4

## 31

☞ D5 missing for Sarga 31 (cf. v.l. 2. 12. 12). —Before Sarga 31, Ś1 Ñ V1 B D1-7 (D5 missing) M4 ins. a passage relegated to App. I (No. 13). —Before 1, Dg1 Dt1 Dd1 Dm1 T G (G2 illeg.) M1-3 ins. :

804* ततः कमलपत्राक्षः श्यामो निरुदरो महान् ।
उवाच रामस्तं सूतं पितुराख्याहि मामिति ।

[Dm1 begins with ॐ. —(l. 1) Dt1 G1 निरुदरो; M2 निरुदरो; Cr.m.g.1p as above (for निरुदरो). —(l. 2) Dt1 राम (for रामस्). M2 कथय (sic) (for आख्याहि).]

1 G2 illeg. from st. 1 (including 804*) up to तं वर्धयित्वा in l. 1 of 806*. —a) Dm1 T2.3 G1 M2 रामः (for राम-). —b) Dt1 Dd1 Dm1 संतापकलुषेंद्रियं. —d) Dt1 Dd1 Dm1 T G1.3 M1-3 निश्वसंतं. —After 1, Dg1 Dt1 Dd1 Dm1 T G (G2 illeg.) M1-3 ins. :

805* उपरक्तमिवादित्यं भस्मछन्नमिवानलम् ।
तटाकमिव निस्तोयमपश्यज्जगतीपतिम् ।

2 G2 illeg. (cf. v.l. 1). —a) Dt1 T1 Ct आलोच्य (for आलोक्य). Dg1 Dt1 च Dd1 Dm1 तं (for तु). ※ Cv : आलोक्य तु सम्यक्प्राज्ञः । ※ —b) Dt1 -चेतनं (for -चेतसम्). —d) Dt1 समभीत् (for आसदत्). —After 2, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins. :

806* तं वर्धयित्वा राजानं पूर्वं सूतो जयाशिषा ।
भयविक्लवया वाचा मन्दया श्लक्ष्णमब्रवीत् ।

[(l. 1) G2 illeg. up to तं वर्धयित्वा (cf. v.l. 1). G2 M1 राजेंद्र (for राजानं). Dg1 सूत-पूर्वं (by transp.); Dt1 पूर्वंसूतो (for पूर्वं सूतो). —(l. 2) Dt1 मंदया श्लक्ष्णमब्रवीत् (for the post. half). ※ Cg : श्लक्ष्णमिति छेदः ।; Cr : श्लक्ष्णमिति छेदः । ※]

3 a) Dg1 Dd1 Dm1 T G2.3 M1-3 पुरुषव्याघ्रो; Dt1 पुरुषो व्याघ्रो. —b) G2 द्वार (sic) (for द्वारि). —For 1-3, Ś1 Ñ V1 B D1.2.4-7 M4 subst. :

807* प्रवेशयतां राम इति वाक्यमुक्त्वा नराधिपः ।
तीव्रशोकसमाविष्टो भूयो मोहमुपागमत् ।
मुहूर्तमिव निश्चेष्टो भूत्वा मोहपरायणः ।
प्रतिलेभे ततः संज्ञां सिंहासनगतो नृपः ।
लब्धसंज्ञं च तं भूयः सुमन्त्रः पृथिवीपतिम् । [5]
उपेत्य प्राञ्जलिर्वाक्यमुवाचेदं सुदुःखितः ।
दत्त्वा धनानि विप्रेभ्यो भृत्येभ्यश्चोपजीविनाम् ।

[(l. 1) D1 राम राम (ditto.). D2.7 रामम् (for रामम्). M4 नराधिपः. —(l. 2) D6 तीव्रशोकसमाविष्टो (for the prior half). V1 राजा (for भूयो). B1 शोकम् (for मोहम्). B2.4 D6 M4 उपागतः. —B4 D6 om. l. 3. —(l. 3) D4.7 अपि (for इव). D6 निश्चेष्टो (for निश्चेष्टो). M4 शोक- (for मोह-). —(l. 4) Ñ1 M4 प्रतिपेदे; V1 प्रतिलभ्य; D1 पुनः लेभे (for प्रतिलेभे). Ñ1 V1 D1.2 पुनः (for ततः). —(l. 5) V1 D1.2 लब्धसंज्ञं; B1 लब्धसंज्ञः; D4.7 लब्धसंज्ञोऽपि; M4 तु लब्धसंज्ञं (for लब्धसंज्ञं च). V1 D1.2 M4 भूयस्तं (by transp.) (for तं भूयः). D6 लब्धसंज्ञं ततो भूयः (for the prior half). D2 पृथिवीपतिः; D7 पृथिवीपति (sic). —(l. 6) V1 उपेत्य. Ñ2 V1 D1.2 [सु]दुःखितः; M4 सुदुःखितः (for [सु]दुःखितः). —(l. 7) D6 दानानि; G(ed.) द्विजेभ्यः (for धनानि). G(ed.) स्वधनं (for विप्रेभ्यो). M4 भार्येभ्यश् (for भृत्येभ्यश्). Ś1 Ñ2 B2.4 D4.7 M4 [उ]पजीवनः; B1 D6 [उ]पजीविनः.]

4 Ś1 Ñ V1 B D1.2.4-7 M4 om. 4. —a) Dt1 Dd1 Dm1 T1 त्वां (for त्वा). —d) Dt1 Dd1 Dm1 शीघ्रानीं (for इदानीं). Dt1 दृक्षते (sic); Dd1 दिदृक्षते (for दिदृक्षते).

5 Ś1 Ñ V1 B D1.2.4-7 M4 transp. 5ab and 5cd (including 808*). —a) G1.2 M1 गमिष्यते (for गमिष्यति). Ś1 Ñ V1 B D1.2.4-7 M4 तत्र तेऽभ्यागतः (B1 °तो) पादौ. —b) G2 M1 पश्य त्वं (for तं पश्य). Ś1 Ñ V1 B D1.2.4-7 M4 यदि मन्यसे (for जगतीपते). —cd) Dm1 वृतं. G1 राजन् (for राज-). Ś1 Ñ V1 B D1.2.4-7 M4 स्व (V1 सु; B4 स) रश्मि(D6 आभ्यां)भिरिवादित्यः इयाति लोके (D1.7 °क) गुणांशु(D6 °आदि)भिः (V1 गुणैर्भुवि). —After 5, Ś1 Ñ V1 B D1.2.4-7 M4 ins. :

808* आज्ञां ते शिरसादाय वने गन्तुं कृताञ्जलिः ।
लक्ष्मणेन सह भ्रात्रा सीतया च नराधिप ।

[(l. 1) Ñ1 illeg.; B2.4 आज्ञां तां (for आज्ञां ते). Ñ1 D2.3.7 गृह्य; Ñ2 B3 [आ]दाय (for [आ]दाय). V1 D1 M4 शिरसा गृहीत्वाज्ञां ते (hypm.); D6 शिरसा गृहीत्वाज्ञां (for the prior half). B3 reads वने in marg. D4.7 कृताञ्जलः. —(l. 2) D4 तु (for च). Ñ B4 D6 नराधिपः.]

G. 2. 35. 6
B. 2. 34. 6
L. 2. 38. 6

स सत्यवादी धर्मात्मा गाम्भीर्यात्सागरोपमः ।
आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तम् ॥ ६
सुमन्त्रानय मे दारान्ये केचिदिह मामकाः ।
दारैः परिवृतः सर्वैर्द्रष्टुमिच्छामि राघवम् ॥ ७
सोऽन्तःपुरमतीत्यैव स्त्रियस्ता वाक्यमब्रवीत् ।
आर्यो ह्वयति वो राजा गम्यतां तत्र माचिरम् ॥ ८
एवमुक्ताः स्त्रियः सर्वाः सुमन्त्रेण नृपाज्ञया ।
प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनम् ॥ ९
अर्धसप्तशतास्तास्तु प्रमदास्ताम्रलोचनाः ।
कौसल्यां परिवार्याथ शनैर्जग्मुर्धृतव्रताः ॥ १०
आगतेषु च दारेषु समवेक्ष्य महीपतिः ।
उवाच राजा तं सूतं सुमन्त्रानय मे सुतम् ॥ ११
स सूतो राममादाय लक्ष्मणं मैथिलीं तदा ।
जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः ॥ १२
स राजा पुत्रमायान्तं दृष्ट्वा दूरात्कृताञ्जलिम् ।
उत्पपातासनात्तूर्णमार्तः स्त्रीजनसंवृतः ॥ १३
सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशांपतिः ।
तमसंप्राप्य दुःखार्तः पपात भुवि मूर्छितः ॥ १४

---

6 $^{ab}$) Dt1 सत्यवाक्यो (for सत्यवादी). Ś1 Ñ V1 B D1.3.4-7 M4 इति राजा सुमंत्रस्य श्रुत्वा वचन( Ñ B2.3 M4 °त्वानंतर; D6 °त्वा भाषित )मब्रवीत्. —B4 om. (hapl.) 6 $^{c}$–8 $^{b}$. —D4.7 om. 6 $^{cd}$. — $^{c}$) D1.2 आकाशम् (for आकाश). Ś1 Ñ V1 B1-3 D1.3.5.6 M4 शुद्धात्मा; Dd1 निष्कंपो; Cg.t as in text, Cr निष्पंदो (for निष्पङ्को). — $^{d}$) Ś1 Ñ V1 B1-3 D1.3.5.6 M4 नि:( B2 M4 नि )श्वस्योक्तं( Ś1 D6 निश्चयोर्थं ) सु( D1 स )दु:खित:( V1 °तं ).

7 B4 om. 7 (cf. v.l. 6). — $^{a}$) D6 [ आ ]नय (metathesis) (for [ आ ]नये). Ś1 Ñ V1 B1-3 D1.3,4.5.7 M4 मे क्षिप्रं: D6 क्षिप्रं मे (for मे दारान्). — $^{b}$) Ñ V1 B1-3 D1.3.5 M4 सार्व( D2 °मै )न (for ये केचिद्). Ś1 D4.5.7 सार्व( D6 °व ) तो हि( D4.7 से ) परिग्रहा:( D6 °ह: ). — $^{c}$) Ñ V1 B1-3 D1.3 M4 दारास्त्व D6 हारै: (for दारै:). T1 M2 (before corr.) परिवृते:. Ś1 D6 तं हि: Ñ1 D4.7 तांहि: Ñ2 V1 B1-3 D1.3.5 तैर्हि: M4 तान्निह (for सर्वैर्). — $^{d}$) G2 राघवः (sic); Kl ed.) धार्मिकं.

8 B4 om. 8 $^{ab}$ (cf. v.l. 6). — $^{a}$) Dt1 [ इ ]व: T1.2 G2 [ आ ]श्रु (for [ इ ]व). Ś1 Ñ V1 B1-3 D1.3.4-7 M4 इत्युक्तो( D6 °क्त्वो )न्त:पु( D1 °तपु [ sic ] )रं गत्वा. — $^{b}$) Ś1 Ñ V1 B1-3 D1.3.4-7 M4 सुमंत्रो (for स्त्रियस्ता). — $^{c}$) Ś1 Ñ B D1.3.5 M4 आर्या:( Ś1 [ m. also ] °र्ये; D2 °र्ये )केवलि: V1 आज्ञापयति: D4.5.7 T2 आर्या ह्वयति (for आर्यो ह्वयति). Ś1 D6 राजा सद्य: D4.7 [ श ]ये राजा; G1 यो राजा (for वो राजा). — $^{d}$) Ñ V1 B D1.3.4.5 M4 transp. गम्यतां and माचिरम्. Ś1 D6 चिरं तत्र हि गम्यतां; D7 अचिरं तत्र गम्यतां. [ Cl.t आगम्यतामिति पदम् । ]

9 $^{b}$) Ś1 Ñ V1 B D1.3.4-7 त्वरान्विता:: M4 महात्मना (for नृपाज्ञया). — $^{c}$) G2 प्रचक्रुमुस् (sic). Ś1 Ñ V1 B D1.3.4-7 M4 तथा( B1.4 D6 [ before corr. ] M4 °थ )ज( B4 त्रि )म्युर्नृपं द्रष्टुं. — $^{d}$) B4 भर्तारमनुशासनात्.

10 $^{ab}$) Dm1 सर्व (for अर्ध-). Dt1 M2 तत्र (for तास्तु). Ś1 Ñ V1 B D1.3.4-7 M4 अर्धसप्तशता( D6 °ता; M4 °तं ) नार्यो रूपवत्य: स्वलं( D6 °ये )कृ( D6 °ग )ता:. — $^{cd}$) G2 [ ए ]व (for [ अ ]थ). Ś1 Ñ V1 B D1.3.4-7 M4 उपे- युस्ता: पतिं( D5 नृपं ) द्रष्टुं कैकेय्या( M4 °यी ) सहितं तदा; B2 [ marg. also ] नृप ).

11 M4 om. 11 $^{c}$–13 $^{b}$. — $^{d}$) G1 राम आनीयतामिति. —For 11, Ś1 Ñ V1 B D1.3.5-7 M4 (l. 1 only for 11 $^{ab}$) subst.:

809* समवेक्ष्यागतान्दारानशेषेण ततो नृपः ।
सुमन्त्रानय मे क्षिप्रं पुत्रमित्यन्वभाषत ।

[ (l. 1) Ñ1 आगतेषु; V1 स निरीक्ष्य (for समवेक्ष्य). Ñ1 गतान्दारान् ; D4.7 [ आ ]गता: सर्वा (for [ आ ]गतान्दारान्). B4 समवक्ष्य° गतन्देवान् (corrupt) (for the prior half). V1 D1.2 निशेषेण; B2 च शेषेण; B3 शेषेण हि (for अशेषेण). B1 reads ततो in marg. V1 D4.7 नृपस्तदा; D1.3.5 M4 नृपस्तत: (by transp.) (for ततो नृप:). Ñ1 अशेषान्समवस्थान: (for the post. half). —(l. 2) B4 [ अ ]न्वभाषत, D6 [ अ ]भिभाषित:. V1 तं पुत्रमित्यभाषत (for the post. half). ]

12 M4 om. 12 (cf. v.l. 11). — $^{a}$) T1.2 सुमंत्रो (for स सूतो). Dg1 Dt1 Dd1 Dm1 T1 G1 M2 तथा; T2 सदा (for तदा). Ś1 Ñ V1 B D1.3.4-7 तत: सुमंत्रस्त्वरितो रामं( B1 D4.7 °म ) लक्ष्मणमेव च( V1 D6 °मब्रवीत् ). — $^{cd}$) Dg1 T2 [ अ ]भिमुखं. Ś1 Ñ V1 B D1.3.4-7 प्रवेशयामास गृहं राज्ञस्तां चैव( G ed. )चापि ) मैथिलीं.

13 M4 om. 13 $^{ab}$ (cf. v.l. 11). — $^{a}$) Ś1 Ñ V1 B D1.3.4-7 दृष्ट्वैव च तद् ( D6 सम् ): Dm1 T1 M3 स राजपुत्रम् (for स राजा पुत्रम्). — $^{b}$) Ś1 Ñ2 B D6 दूराद्रामो; Ñ1 D1.3.4.5.7 रामं दूरात् ; V1 रामं( marg. ) द्रागत् : Dt1 दृष्ट्वा चारात् (for दृष्ट्वा दूरात्). — $^{c}$) Ś1 Ñ B D1.3.4.6.7 M4 आर्त:; V1 दोर्भ्यां; D5 आर्यो (for तूर्णम्). — $^{d}$) Ś1 Ñ V1 B D1.3.4-7 M4 राजा (for आर्त:). Ś1 D4.5.7 स्त्रीसंवृतस्तदा: Ñ1 V1 D1.2 स्त्रीगणसंवृत:.

14 $^{a}$) Dm1 T2 G2 M1 अभि- (for सोऽभि-). — $^{c}$) G2 M1 स तमप्राप्य (for तमसंप्राप्य). —For 14, Ś1 Ñ V1 B D1.3.4-7 M4 subst.:

तं रामोऽभ्यपतत्क्षिप्रं लक्ष्मणश्च महारथः ।
विसंज्ञमिव दुःखेन सशोकं नृपतिं तदा ॥ १५
स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि ।
हा हा रामेति सहसा भूषणध्वनिमूर्छितः ॥ १६
तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ ।
पर्यङ्के सीतया सार्धं रुदन्तः समवेशयन् ॥ १७
अथ रामो मुहूर्तेन लब्धसंज्ञं महीपतिम् ।
उवाच प्राञ्जलिर्भूत्वा शोकार्णवपरिप्लुतम् ॥ १८
आपृच्छे त्वां महाराज सर्वेषामीश्वरोऽसि नः ।
प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ॥ १९
लक्ष्मणं चानुजानीहि सीता चान्वेति मां वनम् ।
कारणैर्बहुभिस्तथ्यैर्वार्यमाणौ न चेच्छतः ॥ २०
अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद ।
लक्ष्मणं मां च सीतां च प्रजापतिरिव प्रजाः ॥ २१

G. 2. 35. 22
B. 2. 34. 24
L. 2. 38. 22

---

810* आगच्छ पुत्र रामेति परिष्वक्तुमुपागतम् ।
 अप्राप्यैव च संभ्रान्तः पपात नृपतिः सुतम् ।

[ (l. 1) M4 एहि पुत्रेति ( for आगच्छ पुत्र ). G(ed.) समागतः. B1 D1.4.5.7 परिष्वक्तुं च( B1 illeg. ) मां भु( B1 बु [ sic ] )जौ ( for the post. half ). —( l. 2 ) V1 अप्राप्यैव स; B4 अप्राप्येव च ( for अप्राप्यैव च ). D4.7 संतप्तः ( for संभ्रान्तः ). V1 D1.2 M4 क्षितौ; D5 तदा ( for सुतम् ). ]

15 a) D1 [ s ]भिपतत् ; D7 [ s ]भिपतन् . —b) D4.5.7 चैव मूर्छितः( D4 °तं ) ( for च महारथः ). —D4.5.7 om. 15cd. —d) M3 सशोक ( for सशोकं ). Dt1 तथा ( for तदा ). —For 15, Ś1 Ñ V1 B D1.2.8 M4 subst. :

811* सोदन्तं तं समन्वेक्ष्य रामः संभ्रान्तमानसः ।
 अप्राप्तमेव चरणौ परिगृह्यातैनानसः ।

[ (l. 1) M4 तातमन्वेक्ष ( for तं सम° ). V1 D1.2 स सीदं ( V1 स सीदंतं; D8 सोदंतं [ sic ] ) समान्वेक्ष ( for the prior half ). —V1 om. ( hapl. ) l. 2. —( l. 2 ) Ś1 चरणौ ( for चरणौ ). B1 परिष्वज्य ( for परिगृह्य ). Ś1 D8 [ अ ]त्यार्तचित्त; B3 [ आ ]तैमानसं ( for [ आ ]तैमानसः ). ]

16 b) T2 ससंज्ञे ( sic ). D8 राजसंसदि ( for राजवेश्मनि ). —D4.5.7 om. 16cd. —d) Dt1 G2 M1 Cmp.kp.t -मिश्रितः; Cr.m.g.tp as in text ( for -मूर्छितः ). —For 16, Ś1 Ñ V1 B D1.2.8 M4 subst. and read after 17 :

812* व्यजनेनोपवेश्यैनं वीजयामास मूर्छितम् ।
 ततः स्त्रीणां महानादः संजज्ञे राजवेश्मनि ।

[ (l. 1) Ś1 D8 वीजनेन; V1 D1.2 आसने च ( for व्यजनेन ). B4 [ उ ]पविश्य ( for °वेश्य ). Ñ2 illeg. after स्रा. D8 वीजयामास ( for वीज° ). V1 D1.2 वार्तिकं ( for मूर्छितम् ). —( l. 2 ) B3 तत्र ( for ततः ). D2.8 महानादः. B4 संजज्ञे ( sic ). M4 तत्र ( for राज- ). ]

17 ab) D8 संपरिष्वज्य. Ś1 Ñ V1 B D1.2.8 M4 पर्यङ्क( आरोप्य तं( V1 B2-4 D1.2 तं )मूर्छं( M4 °छ्य ) तस्मिन्नेव( V1 °वै )आसने पुनः. —cd) T1 G2 सीतया सह पर्यङ्क ( for ° ). Dg1 Dt1 T2 G1 M2 रुदन्तो; D8 ( before corr. as in text ) रुदतः ( for रुदन्तः ). Dg1 D8 Ck समवेशयत् ; M2 संन्यवेशयद् ; Cr as in text. Ś1 Ñ V1 B D1.2.8 M4 लक्ष्मणेन ( D8 °न ) सह भ्रात्रा सीतया चान्व( Ś1 D8 च न्वा; Ñ2 चाश्व; V1 चानु )वेशयत् ( Ñ1 °वेशयन् ; Ñ2 °वेशय ).

18 a) D4.7 तत्र ( for अथ ). Dt1 T1 G2 Cgp.t मुहूर्तस्य; Dd1 G2 मुहूर्तान्ते; Dm1 मुहूर्तार्धं; T2 M1 मुहूर्तात्तु; G1 M2 मुहूर्तात्तु ( for मुहूर्तेन ). Ś1 Ñ V1 B D1.2.8 M4 मुहूर्तादि( D2 °दे )व तं( B1 सं ) रामो. —b) B4 लब्धसंज्ञो; T2 लब्धसंज्ञां ( for लब्धसंज्ञं ). D5 नराधिपं. —c) Dt1 बाष्प- ( for भूत्वा ). —d) D4.5.7 M3 -परिप्लुतः.

19 a) D4.5.7 आपृच्छामि; T2 आपृच्छ त्वां ( for आपृच्छे त्वां ). V1 D1.2 महीपाल ( for महाराज ). —b) T2 [ s ]पि ( for ऽसि ). Ñ V1 B D1.2 M4 ईश्वरोऽसि हि( V1 D1.2 M4 °ऽसि [ by transp. ] ) नः प्रभो. —c) Ś1 Ñ V1 B D1.2.4-7 M4 वनवासाय; Dm1 ( before corr. as in text ) दंडकारण्ये ( for दण्डकारण्यं ). —d) Ś1 Ñ V1 B D1.2.4-7 M4 संपश्य ( for पश्य त्वं ).

20 b) Dt1 Dd1 Dm1 T1 G2 M1.2 Ct [ अ ]न्वेतु; G1 [ अ ]न्वे तु ( sic ) ( for [ अ ]न्वेति ). M3 मा ( for मां ). Ś1 Ñ V1 B D1.2.8 M4 वैदेही च महीपते. —c) Ñ1 राजन् ; D4.7 तथैव ; D5 तथैव ( for तथ्यैर् ). —d) Ñ1 illeg. for वार्यमाणौ. Ñ1 D4.7 इ( Ñ1 illeg. )मावुभौ ( for न चेच्छतः ). D8 वार्यमाणा पुनः पुनः. —For 20cd, Ś1 Ñ2 V1 B D1.2.8 M4 subst.; Ñ1 D4.5.7 ins. after 20 :

813* निवार्यमाणावपि हि न निवृत्ताविमौ मया ।

[ Ñ2 निवर्त्यमाणाव ; V1 निवर्त्यमानाव ; B1 निवर्तमानाव . V1 ते; B4 om. ( subst. ) ( for हि ). Ś1 D8 निवर्तेते ( for निवृत्ता ). B4 वरा ( for मया ). Ñ1 D4.5.7 M4 मयैतौ( M4 °तौ ) न निवर्तं ( Ñ1 °वृत्त )तौ; V1 D1.2 न चैवौ निवर्तितौ ( for the post. half ). ]

—Thereafter D1.2 read ( var. ) for the first time 23cd, repeating it in its proper place.

21 D8 om. 21. —ab) Dg1 मानह ( sic ) ( for मानद ). Ś1 Ñ V1 B D1.4-7 M4 अ( D5 M4 त )तो नौ( B4 न ) वनवासाय गमने कृतनिश्चयान् . —Dg1 reads 21cd in marg. —c) V1 लक्ष्मणं च ( hypm. ) ( for लक्ष्मणं ). —d) Dt1 T1.2 G1.3 M3 [ आ ]त्मजान् ( for प्रजाः ). Ś1 Ñ V1 B D1.4-7 M4 समनु( Ñ2 °न )ज्ञातुमर्हसि.

G. 2. 37. 14 B. 2. 37. 1 L. 2. 40. 13

तस्यां चीरं वसानायां नाथवत्यामनाथवत् ।
प्रचुक्रोश जनः सर्वो धिक्त्वां दशरथं त्विति ॥ १३

स निःश्वस्योष्णमैक्ष्वाकस्तां भार्यामिदमब्रवीत् ।
कैकेयि कुशचीरेण न सीता गन्तुमर्हति ॥ १४

(No. 15). —^d) G3 illeg. for स्वयम्. Ñ1 कौशेयोपरि च स्वयं. —After 12, Ñ1 Dg1 Dt1 Dd1 Dm1 D1.3-5.7 S (M3 after 12^c) ins. a passage of 46 lines relegated to App. I (No. 15).

13 B1 missing (cf. v.l. 9). Before 13, Dm1 ins. उ॰. —^a) G1 चीर- (for चीरं). —^c) D7 G2 सर्वे (for सर्वो). —^d) D4 धिग्धिग्; D5 G1.2 M1 धिक्त्वा; T1 धि॰ (damaged) (for धिक्त्वां). D3 दशरथास्त्विति. —For 13, Ś1 Ñ V1 B2-4 D1-3.6 subst.; while D4.5.7 subst. l. 1 only for 13^ab :

870* तां चीरवसनां दृष्ट्वा भर्तृनाथामनाथवत् ।
प्रचुक्रुशुः स्त्रियः सर्वा धिग्धिगित्येव चाब्रुवन् ।

[(l. 1) Ñ2 B2-4 चीरं वसानां तां दृष्ट्वा (for the prior half). —(l. 2) B3.4 चुक्रुशुस्ताः (for प्रचुक्रुशुः). V1 D1-3 राज्ञो (for सर्वा). V1 D1.2 [ध]िगि (for [ध]िग्). ]

—Ś1 Ñ V1 B2-4 D1-3.6 cont.; Dg1 Dt1 Dd1 Dm1 D4.5.7 ins. after 13 :

871* तं धिक्शब्दं नृपः श्रुत्वा स्त्रीभिः समुदीरितम् ।
चिच्छेद जीवितश्रद्धां धर्मे यशसि चात्मनः ।

[(l. 1) Ś1 D6 धिक्कं; Ñ2 B3 धिक्कृतं (for धिक्शब्दं). D4.5.7 ततः (for नृपः). Dg1 Dt1 Dd1 Dm1 तेन तत्र प्रमादेन (for the prior half). D1.2 स्त्रीभिः. Ñ1 समुदीरितः; G(ed.) समुदाहृतं (for समुदीरितम्). Dg1 Dt1 Dd1 Dm1 D4.6.7 दुःखितः स महीपतिः (for the post. half). —Dt1 om. l. 2. —(l. 2) V1 चिच्छेद (for चिच्छेद). Ñ2 Dg1 Dd1 Dm1 D4.5.7 T G M1-3 जीविते श्रद्धां. Ś1 Ñ V1 B2-4 D1-3.6 M4 सुखश्रद्धां च दुःखितः (Ś1 °ता; M4 दुःखेन); D4.5.7 धर्मश्रद्धां तथात्मनः (for the post. half). ]

14 B1 missing (cf. v.l. 9). —^a) V1 B2.3 Dt1 Dd1 Dm1 D4.5.7 S निश्वस्य (for निःश्वस्य). D4 [इ]त्स्य (for [उ]ष्णम्). G(ed.) निःश्वस्योष्णं स (by transp.). Ś1 Ñ B2-4 D4.5.7 M4 इक्ष्वाकुर्; D1-3 °कुर् (for ऐक्ष्वाकस्). —^b) Ś1 Ñ2 V1 B2-4 D1-7 M4 भार्यां ताम् (by transp.); Ñ1 भार्यां वचनमब्रवीत्. —After 14^ab, Ś1 Ñ B2-4 D1-7 ins. :

872* रामस्यैकस्य गमने वरं याचितवत्यसि ।
न सौमित्रेर्न जानक्या नृशंसे दुष्टचारिणि ।
किमर्थमनयोश्चीरे ददास्यशुभदर्शने ।
पापे पापसमाचारे नृशंसे कुलपांसने ।

[(l. 1) D3 गमने परं याचितवान्. —(l. 2) D3 न शार्ते (for नृशंसे). Ñ1 illeg. from से up to किमर्थं in l. 3. —(l. 3) D4 (marg.) चीरं (for चीरे). —After l. 3, B3 ins. :

872(A)* शृणु वाक्यं च मे धीरे व्याहि स्वामिविघातिनि ।

—D4 om. from l. 4 up to 15^b. —(l. 4) Ś1 कुलनाशिनि; Ñ2 B4 D6 कुलनाश(D6 °स)नि; B3 कुलनाशने; D3.5.7 पापनिश्चये (for कुलपांसने). ]

—Dt1 om. 14^cd. —^c) Ś1 D3.7 न च सौमित्रिर्; B4 कुशचीरे किं (for कुशचीरेण). —^d) V1 सीतां (for सीता). V1 D3 नार्हति. Ñ2 B2-4 सीतां(B4 °ता) च(B2.3 वा) निवु- मर्हसि; D3 न सीतामभियुज्महि; T3 सीता गंतुं च नार्हति. —After 14, Dg1 Dt1 (om. 14^cd) Dd1 Dm1 T G M1-3 ins., while M4 ins. after 15 :

873* सुकुमारी च बाला च सततं च सुखोचिता ।
नेयं वनस्य योग्येति सत्यमाह गुरुर्मम ।
इयं हि कस्यापकरोति किंचित्
तपस्विनी राजवरस्य कन्या ।
या चीरमासाद्य जनस्य मध्ये [5]
स्थिता विसंज्ञा श्रमणीव काचित् ।
चीराण्यपास्याज्जनकस्य कन्या
नेयं प्रतिज्ञा मम दत्तपूर्वा ।
यथासुखं गच्छतु राजपुत्री
वनं समग्रा सह सर्वरत्नैः । [10]
अजीवनार्हेण मया नृशंसा
कृता प्रतिज्ञा नियमेन तावत् ।
त्वया हि बाल्यात्प्रतिपन्नमेतत्
तन्मां दहेद्वेणुमिवात्मपुष्पम् ।
रामेण यदि ते पापे किंचित्कृतमशोभनम् । [15]
अपकारः क इह ते वैदेह्या दर्शितोऽधमे ।
मृगीवोत्फुल्लनयना मृदुशीला मनस्विनी ।
अपकारं कमिव ते करोति जनकात्मजा ।

[M4 om. l. 1. —(l. 1) G1 सुखोचिता. —(l. 3) M4 च (for हि). T3 तस्य (for कस्य). —(l. 4) Dt1 Dd1 Dm1 पुत्री(Dm1 °त्री) (for कन्या). —(l. 5) Dg1 M4 सा (for या). —(l. 6) Dt1 जाता (for स्थिता). —(l. 7) G1 [अ]-पास्येत्; M3 [अ]पास्ये (for [अ]पास्याज्). —(l. 9) T1 damaged from य up to व in l. 10. —(l. 12) M3 क्रिया (for कृता). M3.4 नियतेन; Cm.g.t as above (for नियमेन). M4 तात (for तावत्). —(l. 15) T2 या (for ते). T2 पापं (for पापे). —(l. 16) Dg1 M3 अपराधः; G1 अपहारः (for अपकारः). M4 इव (for इह). K(ed.) [ऽ]थ मे (for ऽधमे). —(l. 17) Dg1 G2 M1.4 तपस्विनी; M3 यशस्विनी. —(l. 18) M3 अपरार्थं. Dg1 T2 G3 M3 कमिह; Dd1 किमिव; G2 किमिह (for कमिव). ]

ननु पर्याप्तमेतत्ते पापे रामविवासनम् ।
किमेभिः कृपणैर्भूयः पातकैरपि ते कृतैः ॥ १५

एवं ब्रुवन्तं पितरं रामः संप्रस्थितो वनम् ।
अवाक्शिरसमासीनमिदं वचनमब्रवीत् ॥ १६

इयं धार्मिक कौसल्या मम माता यशस्विनी ।
वृद्धा चाक्षुद्रशीला च न च त्वां देव गर्हते ॥ १७

मया विहीनां वरद प्रपन्नां शोकसागरम् ।
अदृष्टपूर्वव्यसनां भूयः संमन्तुमर्हसि ॥ १८

G. 2. 37. 28
B. 2. 38. 14
L. 2. 40. 22

15 B1 missing (cf. v.l. 9). D4 om. 15ab (cf. v.l. 14). M4 repeats 15 after 873* which is inserted in M4 after the first occurrence of 15. —a) V1 न स्व-; Dm1 D5 ननु-; D7 T3 न तु (for ननु). Ś1 Ñ V1 B2-4 D1-3.5-7 M4 (first time) पुत्रावन्; Dg1 T G M2-3 पूर्व तेः D11 पूर्व ते (for पुत्रते). —b) B2 M4 (both times) पापं (for पापे). D3.6 G2 M3 रामनिवासनं. —c) M3 किमेन्यः. —For 15cd, Ś1 Ñ V1 B2-4 D1-7 M4 (first time) subst.:

874* किं ते भूय इदं कर्तुं मतिर्निरयगामिनि ।

[B4 भूयत्. V1 कर्तं; M4 कार्यं (for कर्तुं). Ñ1 D3-5.7 कार्यं; V1 D1.2 M4 वार्य; B4 मति (for मतिर्). D4.7 नरकगामिनि (for निरय°).]

—After 15, Dg1 Dt1 (l. 1-4 only) Dd1 Dm1 S (M4 after the repetition) ins.:

875* प्रतिज्ञातं मया तावत्त्वयोक्तं देवि शृण्वता ।
रामं यदभिषेकाय त्वमिहागमयमयीः ।
तस्यैतत्समतिक्रम्य निरयं गन्तुमिच्छसि ।
मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीम् ।
इतीव राजा विलपन्महात्मा [5]
शोकस्य नान्तं स ददर्श किंचित् ।
भृशातुरत्वाच्च पपात भूमौ
तेनैव पुत्रव्यसनेन मग्नः ।

[(l. 1) Dt1 शृण्वतां. —(l. 2) Dm1 त्वम् (for यद्). T2 G M4 अब्रवीत् (for अवयीः). —(l. 3) Dt1 न; T3 तं (for तस्य). T3 चैतत्; G1 एतत् (for तैतत्). —(l. 4) M4 वां (for या). T1.2 G2 देव्य(T1 °व्य)से; T3 देहते. —(l. 6) Dd1 सददर्श (for स ददर्श). —(l. 7) M1.2 भृशातुरत्वाच्च. —(l. 8) Dg1 Dd1 Dm1 G1 M1.2 -व्यसनेन मग्नः.]

16 B1 missing up to रामः in b (cf. v.l. 9). —a) Ś1 Ñ V1 B2-4 D1-3.6 M4 इति (Ñ1 एवं) ब्रुवाणं (for एवं ब्रुवन्तं). V1 D1-3 नृपतिं (for पितरं). B1 repeats erroneously from संप्रस्थितो in 16b up to 2. 34.5ab. —b) D4.7 च प्रस्थितो (for संप्रस्थितो). —c) Ñ B1-3 अवाक्शिरा समासीनम्; D5 अवाक्शिरःसमासीनम्. —B3 reads from 16d up to राजन् in l. 1 of 876* in marg.

17 B3 reads 17 in marg. (cf. v.l. 16). —a) Ś1 Ñ V1 B D1-3.5 M4 धर्मज्ञ (D5 °ज्ञा); D4.5.7 च राजन् (for धार्मिक). —b) Ś1 Ñ2 B3.4 D6 माता मम (by transp.). Ś1 Ñ V1 B D1-7 तपस्विनी. —B4 reads from 17c up to l. 1 of 877* in marg. —d) M4 नैव (for न च). Ś1 Ñ V1 B D1-7 सुभृशं (V1 D1-3.7 भृशं च) त्वामनुव्रता (B3 °ते); Dm1 न त्वां देव विगर्हते.

18 V1 D1.2 M4 om. 18. —d) T3 मा संतुम्. —For 18, Ś1 Ñ B (B3 marg. [cf. v.l. 17]) D3-7 subst.:

876* मद्वियोगात्कृशां राजन्निमग्ना शोकसागरे ।
अदृष्टपूर्वं व्यसनं प्राप्तं पुत्रविवासनम् ।
मेऽनुग्रहार्थं कृपणा त्वत्तो रक्षणमर्हति ।

[(l. 1) B3 reads the prior half in marg. (cf. v.l. 16). D3-5.7 दुःखं (for कृशां). —Ś1 Ñ B D6 om. l. 2. —(l. 2) D4.7 प्राप्ता. D4 पुत्रविवासने. —D3 om. l. 3. —(l. 3) Ś1 Ñ1 B2 D3.5-7 मदनुग्रहार्थं (hypm.); B1.4 अनुग्रहार्थं (for मेऽनुग्रहार्थं). D4.7 कृपणां. B1.3.4 [s]से (B4 है)छणम् (for रक्षणम्). D3.5.7 त्वमेवेहितुमर्हसि (for the post. half).]

—Thereafter, all the above MSS. (except D4) cont.:

877* यथा न दुःखितेयं स्यात्तथा माधव नाथिनी ।
मदपेक्षा तथा राजन्सादरं द्रष्टुमर्हसि ।

[B4 reads l. 1 in marg. (cf. v.l. 17). —(l. 1) D5 [इ]यं दुःखिता न (by transp.). D3.5.7 दुःखिता (for नाथिनी). —(l. 2) Ñ2 B1-4 D3.5-7 मदपे(D3.7 °पे)क्षया (hypm.) (for मदपेक्षा). B3 यथा (for तथा). Ś1 Ñ1 B3 D3-7 स्नेहे (D4 °हे)नां; B1 स्नेहेनां; D6 स्नेह (for सादरं).]

—After 18, Dg1 Dd1 Dm1 T G M1-3 ins.:

878* पुत्रशोकं यथा नर्च्छेत्त्वया पूज्येन पूजिता ।
मां हि संचिन्तयन्ती सा त्वयि जीवेत्तपस्विनी ।

[(l. 1) T2 पुत्रशोकं. Dg1 G2 नेच्छे(Dg1 °च्छेत्). M3 गच्छेत् (for नर्च्छेत्). Cgp न यच्छोकाचया नश्येत् (for the prior half). Dg1 तथा (for त्वया). M3 पूज्या न (for पूज्येन). T3 तं यथा नैति पूजिता (for the post. half). —(l. 2) Dm1 सा (for मां). Dg1 या; Dd1 Dm1 G2 M1-3 यं; T3 या; Cgp [इ]यं (for सा). Dg1 Dd1 Dm1 अपि; T2 M3 यदि (for त्वयि).]

G. 2. 37. 24
B. 2. 38. 15
L. 2. 40. 23

इमां महेन्द्रोपम जातगर्धिनीं
तथा विधातुं जननीं ममार्हसि ।
यथा वनस्थे मयि शोककर्शिता
न जीवितं न्यस्य यमक्षयं व्रजेत् ॥ १९

इति श्रीरामायणे अयोध्याकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

# ३४

रामस्य तु वचः श्रुत्वा मुनिवेषधरं च तम् ।
समीक्ष्य सह भार्याभी राजा विगतचेतनः ॥ १
नैनं दुःखेन संतप्तः प्रत्यवैक्षत राघवम् ।
न चैनमभिसंप्रेक्ष्य प्रत्यभाषत दुर्मनाः ॥ २
स मुहूर्तमिवासंज्ञो दुःखितश्च महीपतिः ।
विललाप महाबाहू राममेवानुचिन्तयन् ॥ ३
मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः ।
प्राणिनो हिंसिता वापि तस्मादिदमुपस्थितम् ॥ ४

19 a) B4 इदं (for इमां). Ś1 D4 तात दुःखिताम्; Ñ1 B1.2.4 जात दुःखिताम्; Ñ2 B2 जातु दुःखिताम्; D1.7 पुत्रवर्धिनीम्; T1 G1 पुत्रगर्धिनी; M1.2 जातगृद्धिनीं (for जातगर्धिनीं). V1 D1-3 M3 इमां महेंद्रप्रतिमप्रभाव (M4 °भाव). — b) Ś1 Ñ V1 B D1-7 अपि (V1 D1-3 तथे) हितुं त्वं; T2 तथाविधां त्वं; M4 यथा विहीनां (for तथा विधातुं). V1 B2 (after corr. sec. m. as in text) D2 T2 जननी (for जननीं). D1.3.7 इहार्हसि; M1.2 त्वमर्हसि (for ममार्हसि). — c) T2 मम (for मयि). — d) Ś1 Ñ V1 B D1-7 M4 न जीवहीना (D4 मया विहीना) यमसाद् (Ś1 °शाल) नं च (B2 भ) येत्.

Colophon. D4.7 om. (sarga cont.). — *Sarga name*: Ś1 (marg.) Ñ B D2 रामस्य (Ś1 om. रामस्य; Ñ2 B2.3 D2 राम) चीरपरिग्रहः (Ñ1 °संग्रहणा); V1 D1-3 चीरग्रहणिकं; D2 दंडकारण्यगमने रामवाक्यं. — *Sarga no.* (figures, words or both): Ñ1 D2 om. Ś1 D2 40; Ñ2 B2.4 36; V1 Dg1 Dt1 Dd1 Dm1 D3 S 38; B1.3 37; D1 93; D2 44. — After colophon, D2 G M1.2 conclude with श्री (D2 om.) रामाय नमः; T1 श्रीरामचन्द्राय नमः.

# 34

D4.7 continue the previous sarga. Ś1 Dm1 D2 begin with ॐ. Sts. 1–5[a] appear twice in the photocopy of B1.

1 a) Dg1 वचनं (for तु वचः). — b) Dm1 श्रुतं (for च तम्). — c) Dg1 सहभार्यो हि. — d) T2 (अ) पि गत- (for विगत-). — For 1, Ś1 Ñ V1 B D1-7 M4 subst.:

879* मुनिवेषधरं रामं दृष्ट्वैवाविदितं नृपः ।
भार्याभिः सह सर्वाभिः शुशोच च रुरोद च ।

[(L. 1) Ś1 Ñ B D1.4 मुनिवेशः. D2 वीरं (for रामं). — (L. 2) D1.2.7 इहाभिः (for सर्वाभिः). B1 प्ररोद (for च रुरोद). M4 transp. शुशोच and रुरोद.]

2 a) M2 नेन (for नैनं). — b) Dg1 Dt1 Dd1 Dm1 T1 G1.2 M2 C1 प्रत्यवेक्ष (M2 °क्ष) त; C1 °वैक्षत (as in text). — c) Dm1 (प्) वम् (for (प्) तम्). — For 2, Ś1 Ñ V1 B D1-7 M4 subst.:

880* न चैनं शोकदुःखार्तः शशाकाभिनिरीक्षितुम् ।
न चाभिभाषितुं राजा शशाकैनं कृपान्वितः ।

[(L. 1) D2 चैवं (for न चैनं). D1.2 M4 दुःखशोकार्तः (by transp.). D4.5.7 नैनं शोके (D4 दुःखे) न संतप्तः (for the prior half). V1 (न) शिशि वीक्षितुः D1 च निरीक्षितुः D2 (अ) विसमीक्षितुं (for (अ) भिनिरीक्षितुम्). — (L. 2) B4 (अ) पि (for (अ) भि-). Ś1 D2 सुदुःखितः; Ñ2 B1.2.4 कृपान्वितः (for कृपान्वितः).]

3 a) B4 मु- (for स). Ś1 Ñ1 B1.2.4 D2-7 M4 इव ध्यात्वा; B3 अपि ध्यात्वा (for इवासंज्ञो). Ñ2 V1 D1.3 मुहूर्तमिव स ध्यात्वा. — b) D4.5.7 पृथिवीपतिः (for च महीपतिः). Ś1 Ñ V1 B D1-4.6 M4 दुःखार्ता (Ś1 B4 D6 °र्तः; Ñ2 D1.3 °आर्त्तः; V1 °र्तो) विलोचनः. — cd) Ś1 D2 (आ) तुरो दीनो (for महाबाहू). Ñ V1 B D1-2 M4 विललापातुरो राजा हृतांशवत् (B1 °वात्मज) मोहितः.

4 b) D2 विपुलाः पुत्रवत्सलाः. — Ñ1 reads 4[cd] after 883*. — c) Ñ1 D1-4.7 चापि; Dg1 पापं (for वापि). — d) Ñ1 Dt1 D2-4.7 तन्मात् (for तस्माद्). — For 4, Ś1 Ñ2 V1 B D1.2.4 M4 subst.; Ñ1 subst. for 4[ab]; while D2 ins. after 4:

881* नूनं मया कृताः पूर्वं विपुलाः पुत्रवत्सलाः ।
यथा पुत्र वियुक्तोऽहं त्वया निष्करुणोऽद्यः ।

[(L. 1) D1 कृता मया (by transp.). B3 अपुत्राः. Ñ1 पुरा (for पुत्र-). D2 विवत्सा बहवो कृताः (for the post. half). — (L. 2) D1.4 M4 यदा (for यथा). Ñ1 B1.2 वियुक्तोऽहं; V1 D1.2 M4 वियुक्तानि (D2 °नि); B4 विनुक्तोऽहं (sic); D1 वियुक्तानि (for वियुक्तोऽहं). V1 D1-3 M4 कृतवांश्च समाचरः (for the post. half).]

न त्वेवानागते काले देहाच्च्यवति जीवितम् ।
कैकेय्या क्लिश्यमानस्य मृत्युर्मम न विद्यते ॥ ५
योऽहं पावकसंकाशं पश्यामि पुरतः स्थितम् ।
विहाय वसने सूक्ष्मे तापसाच्छादमात्मजम् ॥ ६
एकस्याः खलु कैकेय्याः कृतेऽयं क्लिश्यते जनः ।
स्वार्थे प्रयतमानायाः संश्रित्य निकृतिं त्विमाम् ॥ ७
एवमुक्त्वा तु वचनं बाष्पेण पिहितेक्षणः ।
रामेति सकृदेवोक्त्वा व्याहर्तुं न शशाक ह ॥ ८
संज्ञां तु प्रतिलभ्यैव मुहूर्तात्स महीपतिः ।
नेत्राभ्यामश्रुपूर्णाभ्यां सुमन्त्रमिदमब्रवीत् ॥ ९

G. 2. 38. 9
B. 2. 39. 9
L. 2. 41. 9

—After 4, Ñ1 [after 4^cd read after 883*] D4.5.7 ins.:

882* भिक्षां नूनमसौ निर्लज्जो योऽहमजितेन्द्रियम् ।
एवं त्यजामि यो ज्येष्ठमिमं पुत्रमकारणात् ।
सत्यप्रतिज्ञता नाम विज्ञात क्षत्रियव्रतम् ।
त्यजामि पुत्रमत्यार्य यत्कृते निरपत्रपः ।
वरप्रदानमज्ञानाद्व देवे खलु पण्डितैः । [ 5 ]
अस्थावरस्वभावानां युवतीनां विशेषतः ।
नेदृशोऽप्युपलभ्येत स्वकृतेन मनस्विना ।
अनर्थो दुस्तरो लोके प्राप्तोऽयं यादृशो मया ।
इच्छेयं जीवितं त्यक्तुं कालेनापहृतेन्द्रियः ।
व्यसने हि नृणां मृत्युः स्वर्गादपि विशिष्यते । [ 10 ]

[ (l. 1) Ñ1 धूत्वामिमत्रं (for नूनमसौ निर्लज्जो). —(l. 2) D4.7 प्रियं (for इमं). Ñ1 D6 अकाले. —(l. 3) D4 (after corr. sec. m.) मे विज्ञत तत् (for नाम विज्ञात). Ñ1 विचार्ये क्षत्रिये वने; D5 वेदवर्वं क्षत्रियव्रते (for the post. half). —(l. 4) Ñ1 अथाह; D4 त्यक्तार्य (hypm.) (for त्यार्य). Ñ1 illeg. from यत्: up to ज्ञा in l. 5. —(l. 5) Ñ1 नादेव (for न देवे). —(l. 6) D7 विशेषतः (hypm.). —(l. 7) Ñ1 नेदृशा युपलभ्येते (for the prior half). D4 नेत्यहृता ह्युपलभ्यन्ते स्वागुणेन मनस्विनि (hypm.). —(l. 8) Ñ1 यस्तु स्वयं. —(l. 9) D4.5 जीवितुं (for जीवितं). Ñ1 त्यक्तं (for त्यक्तुं). Ñ1 D6 इच्छिन्नापहृतेन्द्रियः; D4 कालेनेह हृतेन्द्रियः (for the post. half.) —(l. 10) Ñ1 स्वगादपि (for स्वर्गादपि).]

5 ^a) T1 ननु (for न तु). —^b) Dg1 देहाच्चवर्तते; T1 G1.2 M3 देहात्प्रवर्तते. —^d) M3 मनसि (for मम न). —For 5, Ś1 Ñ V1 B D1-7 M4 subst.:

883* अकाले देहिनां मृत्युस्तात नूनं न विद्यते ।
वियुज्यमानो यन्मृत्युं नाधिगच्छाम्यहं त्वया ।

[D2 om. l. 2. —(l. 1) Ñ2 अकाले देहिनां; B2.3 अकालदेहिनां; D4 अकाले देहि नो (sic) (for अकाले देहिनां). Ś1 D6 मृत्युर्नं तावत्; V1 D1.2.3 M4 तात नूनं मृत्युर् (by transp.); D4.7 तावन्नूनं मृत्युर् (for मृत्युस्तात नूनं). —(l. 2) Ñ1 D1 वियुक्तमानो; V1 वियुज्यमानो न (hypm.); B4 वियुज्य°; D4.5 °माने (for वियुज्यमानो). B4 मृत्युर् (for मृत्युं). D2 न च (for नाधि-).]

—Thereafter Ñ1 reads 4^cd.

6 ^b) Dg1 reads स्थितम् in marg. —For 6, Ś1 Ñ V1 B D1-7 M4 subst.:

884* लोककान्तं प्रियं पुत्रं कुशचीरधरं वनम् ।
प्रस्थितं पश्यतो मेऽद्य हृदयं किं न दीर्यते ।

[(l. 1) D2 लोककांति-. B4 कांतं (for पुत्रं). Ñ2 B1 (m. also).2 -चीरांबरावृतं; B1 D2-4.7 M4 -चीरधरं वने (B1 D4.2 °नं); B3.4 -चीराजिनावृतं; D1 -चीरधरं वने (for -चीरधरं वनम्). —(l. 2) Ñ2 B2 न विदीर्यते; D2 यन्न दीर्यते (for किं न दीर्यते).]

—All the above MSS. cont.:

885* यत्र पुत्र मया काले त्यक्तजीवोऽस्मि सर्वथा ।
दुःखे महति तत्र त्वां योजयामि धिगस्तु माम् ।

[(l. 1) B4 om. काले. Ś1 Ñ1 D6 सर्वदा (for सर्वथा). —(l. 2) M4 त्वा (for त्वां). Ñ2 नियुंक्ते (subm.); V1 नियुक्ष्मि; D1-3 M4 नि(D2 वि)युनज्मि; D4.7 विनियुंजे; D6 विनियुक्तो (for योजयामि).]

7 ^a) D6 कृतेयं; D4 कृते यत् (for कृतेऽयं). Ś1 Ñ2 V1 B D1-3.4 M4 दुःखितो; Dt1 क्लिश्यते; B (ed.) क्लिश्यते (for क्लिश्यते). —M4 om. 7^c–8. Ś1 Ñ2 B D6 om. 7^cd. —^c) D2 स्वीये (for स्वार्थे). D5 प्रयतमानां यो. —^d) Dg1 D4.5.7 संस्मृत्य; D1 T2 G2 M1.2 Cr*p* संस्मृत्य; Cr संस्कृत्य; Cm.g as in text (for संश्रित्य). D1-3 निकृतिं (D3 °तें) पुरा; D4.5.7 विकृतामिमां. Ñ1 संदृश्य विकृतीमिमां; V1 संश्रुत्य नकृतां पुरा (sic).

8 M4 om. 8 (cf. v.l. 7). —^a) V1 D1-3 एवमाद्युक्त्वा; D4.5.7 स एवमुक्त्वा (for एवमुक्त्वा तु). —^b) V1 D1.3 शोकेन (for बाष्पेण). V1 Dt1 D1.3 [अ]पिहितेन्द्रियः; Dd1 Dm1 M3 पिहितेन्द्रियः; G2 M1 पिहिताननः; B (ed.) पिहितेन्द्रियः (for पिहितेक्षणः). D2 शोकेनावृतेन्द्रियः; D4.7 बाष्पापिहितलोचनः; D6 बाष्पापिहितलोचनः. —Ñ1 transp. 8^cd and 9^ab. —^c) D1.5 स तदैवोक्त्वा. —^d) Ñ1 Dt1 सः (for ह). V1 D1.3-5.7 व्याहर्तुं नाशकत्पुनः. —For 8, Ś1 Ñ2 B D6 subst.; Ñ1 subst. for 8^cd:

886* इत्युक्त्वा विपपातोर्व्यां राजा मूर्छां जगाम च ।

[Ñ1 मुह्य (sic) (for मूर्छां). B4 ह (for च).]

9 Ñ1 transp. 8^cd and 9^ab. —^a) Ś1 Ñ B D6 च (for तु). Ś1 Ñ B D6 [अ]थ; D1 [तु]थ; G2 [इ]व (for [तु]व). —^b) B1 च (for स). D6 स मुहूर्तात् (by transp.). —^c) Ś1 Ñ V1 B D1-7 M4 अश्रुपूर्णाक्षो वाक्यं (Ñ2 राम). —^d) Ñ1 वाक्यम् (for इदम्).

G. 2. 38. 10
B. 2. 39. 10
L. 2. 41. 10

औपवाह्यं रथं युक्त्वा त्वमायाहि हयोत्तमैः ।
प्रापयैनं महाभागमितो जनपदात्परम् ॥ १०
एवं मन्ये गुणवतां गुणानां फलमुच्यते ।
पित्रा मात्रा च यत्साधुर्वीरो निर्वास्यते वनम् ॥ ११
राज्ञो वचनमाज्ञाय सुमन्त्रः शीघ्रविक्रमः ।
योजयित्वाययौ तत्र रथमश्वैरलंकृतम् ॥ १२
तं रथं राजपुत्राय सूतः कनकभूषितम् ।
आचचक्षेऽञ्जलिं कृत्वा युक्तं परमवाजिभिः ॥ १३
राजा सत्वरमाहूय व्यापृतं वित्तसंचये ।
उवाच देशकालज्ञो निश्चितं सर्वतः शुचि ॥ १४
वासांसि च महार्हाणि भूषणानि वराणि च ।
वर्षाण्येतानि संख्याय वैदेह्याः क्षिप्रमानय ॥ १५
नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः ।
प्रायच्छत्सर्वमाहृत्य सीतायै क्षिप्रमेव तत् ॥ १६

10 a) Dg1 Dt1 युक्ता; Dd1 Dm1 Ct$p$ योज्य; T1.2 संयुक्त्वा; Cr.g.k.t as in text (for युक्त्वा). — b) T2 त्वरया हि (for त्वमायाहि). — For 10, Ś1 Ñ V1 B D1-7 M4 subst.:

887* युक्त्वा रथं मदीयं त्वं शीघ्रमानय वाजिभिः ।
तेन प्रापय मे पुत्रं वनं मुनिजनप्रियम् ।

[(l. 1) D2 संयुक्ता; D7 युक्तं; M4 चमार् (for युक्त्वा). D1 तु. D2 नं (for त्वं). D6.7 शुभम्; D2 क्षिपम् (for शीघ्रम्). B4 मां नय; D6.7 नाहय (for मानय).]

11 Ñ2 V1 B D1.2 M4 om. 11. — a) Ś1 Ñ1 D3-7 एतत् (for एवं). Ñ1 गुणवतो. — b) D4 फलानां (for गुणानां). — c) T G1.2 M1 माता पित्रा (by transp.). D3 [स]च (sic) (for च). Ś1 Ñ1 D4.6.7 यः; T2 पाः (sic) (for यत्). — d) Ś1 Ñ1 D3-7 पुत्रं (D6.7 °त्र) (for वीरो) and सुतः (for वनम्).

12 a) G2 M1 माख्याय (for आज्ञाय). — c) C1 ययौ. Cr.g.k आययौ इति पदच्छेदः । — d) D4.6.7 स्वलंकृतैः (D6 °तः) (for अलंकृतम्). — For 12, Ś1 Ñ V1 B D1-3.5 M4 subst., D4.6.7 subst. l. 1 only for 12$^{ab}$:

888* इति राज्ञा समादिष्टः सुमन्त्रस्त्वरयान्वितः ।
आजगाम रथं राज्ञो युक्त्वा परमवाजिभिः ।

[(l. 1) Ñ B1.2.4 D1-3 M4 समाज्ञप्तः; V1 समाज्ञातः (for °दिष्टः). Ś1 V1 D2.6 त्वरयान्वितः; Ñ1 illeg.; D3-4.7 M4 स त्वरान्वित (for त्वरयान्वितः). — (l. 2) Ñ1 जेतमिथ्या (for आजगाम). Ñ1 D1 युक्तं (for युक्त्वा).]

13 a) Dt1 कनकभूषितः; D4.6.7 कनकभूषणं (for °भूषितम्). — c) D4.6.7 आचचक्षे प्रांजलिर्भूत्वा. — d) G2 परमवाजिभिः (sic). — For 13, Ś1 Ñ V1 B D1-3.5 M4 subst.:

889* उपनीय च युक्तं तं रथं रत्नविभूषितम् ।
राज्ञो निवेदयामास रथोऽयं युक्त इत्युत ।

[(l. 1) V1 तत्नीय. D2 तु (for च). Ś1 V1 D1.2.4 तेयुक्तं. D3 M4 तं युक्तं (by transp.). — (l. 2) B D3 (before corr. राज्ञे) राज्ञे (for राज्ञो). Ñ1 युक्तम् (sic) (for युक्त). Ś1 D5 युक्त इत्यभितोऽवदत्; V1 D1.2 युक्त इ(V1 °त्यभि)त्यभितो मतः; D3 युक्त इत्यभिपालतः; M4 युक्त इत्यभितो मतः (for the post. half).]

14 b) Dg1 T2 व्याहृतं (for व्यापृतं). T2 G2 वृत्तसंचये. — c) Dg1 Dd1 Dm1 G1 M3 देशकालज्ञं (M3 °ज्ञ). — d) T2 निश्चितं (for निश्चितं). Dg1 Dd1 T2 G1.2 M1-3 Cr.m.g शुचिः; Dt1 Dm1 T1 Ck.t शुचिः (for शुचि). — For 14, Ś1 Ñ V1 B D1-7 M4 subst.:

890* कोशाध्यक्षमथाहूय स्वममात्यं नराधिपः ।
उवाचेदं वचो धर्म्यं शोकव्याकुलिताक्षरम् ।

[(l. 1) Ñ2 V1 B कोशाध्यक्षम्; D3 कोशाध्यक्षान्. D2 समाहूय; M4 व्याहूय (for अथा°). D1 स्वमात्य (for स्वममात्यं). — (l. 2) B4 [व]चं (for [व]दं). Ñ1 -व्याकुलितेक्षणः; D1 -व्याकुलिताक्षरः (for °ताक्षरम्).]

15 a) Ś1 Ñ V1 B D1-7 M4 त्वं (for च). V1 समार्हाणि; Dt1 Dd1 Dm1 G2 M1 वरार्हाणि. — b) B1 धनानि; Dt1 महान्ति (for वराणि). — c) B1.4 सर्वाणि; G2 वित्तानि (for वर्षाणि). — d) Ś1 Ñ V1 B D1-7 M4 वैदेह्यै (M4 °ह्याः) प्रतिपादय.

16 a) Ś1 Ñ2 V1 B D1-3.4 M4 इति राज्ञा समादि(D1 °ति)ष्टो. — b) V1 B Dg1 कोषगृहं; D1 G1.2 कोष° (for कोश°). Ś1 Ñ2 V1 B D1-3.4 तु सः; D6.7 हि सः (for ततः). — c) Ś1 Ñ B D2 शीघ्रम्; V1 D1.2 तुलम्; D6.7 क्षिप्रम्; G2 M1.2 स्वयम् (for सर्वम्). Ś1 V1 D1.3.6.7 आनीय; Ñ B D2 M4 आहाय; D4 आनाय (for आहृत्य). D2 प्रायच्छत समानीय; M4 प्रायच्छत्स समाहृत्य. — d) Ś1 Ñ V1 B D1-3.5.6 वैदेह्यै; D4.7 M4 वैदेह्याः (for सीतायै). Ś1 Ñ B D1-7 G2 M सर्वम्; V1 Dd1 Dm1 G1 Cm.g.t$p$ समम् (for क्षिप्रम्). — After 16, B1.2 ins.:

891* ततो महार्हाभरणानि चैव
दत्तो कुमार्यै व्यपनीय चीरम् ।
चीरं न युक्तं परिधानमस्या
नियामयामीत्यवदद्वसिष्ठः ।
एकस्य रामस्य वने निवास-
स्त्वया वृतः केकयराजपुत्रि ।
विभूषितेयं प्रतिकर्मणा नु
वसत्वरण्ये सह राघवेण ।

[ 5 ]

सा सुजाता सुजातानि वैदेही प्रस्थिता वनम् ।
भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ॥ १७
व्यराजयत वैदेही वेश्म तत्सुविभूषिता ।
उद्यतोऽंशुमतः काले खं प्रभेव विवस्वतः ॥ १८
तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत् ।
अनाचरन्तीं कृपणं मूर्ध्न्युपाघ्राय मैथिलीम् ॥ १९
असत्यः सर्वलोकेऽस्मिन्सततं सत्कृताः प्रियैः ।
भर्तारं नानुमन्यन्ते विनिपातगतं स्त्रियः ॥ २०

G. 2. 38. 19
B. 2. 39. 20
L. 2. 42. 4

यानैश्च दीप्तैः परिचारकैश्च
सुसंवृता गच्छतु राजपुत्री । [10]
वस्त्रैश्च सर्वैः परिवर्तमाने
स्तैयां कृता ते वरसंप्रदाने ।

[ (l. 1) B3 दिव्यै (sic) (for देवि). —(l. 2) B2 चीवरं (for चीरम्). —(l. 4) B1 नमिश्र: (sic) (for वर्षिश्च:). —(l. 10) B1 सर्व वृता (for सुसं°). —(l. 11) B2 विविधैर्विमानैस् (for परिवर्तमानैश्च). —(l. 12) B2 सा वनसंप्रयाणे (for ते वरसंप्रदाने).]

17 ᵃ) T1 सु०तानि. —ᵈ) T2 reads तैर् in m. —For 17, Ś1 Ñ V1 B D1–7 (D4.7 om. hapl.?) M4 subst.:

892* ततो निवासयामास तानि वासांसि मैथिली ।
भूषयामास चात्मानं भूषणैस्तैर्वरानना ।

[ (l. 1) V1 [ऽ]निवासयामास; D5 निवेशयामास. D2 निवासांसि च (for तानि वासांसि). Ñ1 D4 भामिनी (for मैथिली). —(l. 2) Ñ1 गात्राणि (for चात्मानं).]

18 ᵇ) Dm1 सुविभूषिताः G2 M1 °षिते (for सुविभूषिता). —For 18, Ś1 Ñ V1 B D1–7 M4 subst.:

893* ततो विराजयामास तद्वेश्म सुविभूषिता ।
विमलेव प्रभा सौरी व्यभ्रं वितिमिरं नभः ।

[ (l. 1) D3 [ऽ]विराजयामास. V1 सुविभूषित. Ñ2 B D2 सा तद्वेश्म विभूषिता; D2 तद्वेश्म सुभूषिता (for the post. half). —(l. 2) Ñ1 B4 सौरी (for सौरी). D5 व्यभ्र (for व्यभ्रं). V1 व्यभ्राल्लं तिमिरं; B1 वितमस्तिमिरं; B2 विभ्रं च हतिमिरं (sic).]
—Ś1 Ñ1 D1–7 cont.:

894* यथा तु सा मैथिलपार्थिवात्मजा
विभूषिता प्रीतिकरैर्विभूषणैः ।
विद्युत्सुनेव सौरिव तोयदागमे
शतह्रदापद्मशतैरलंकृता ।

Colophon

[ (l. 1) D2 मैथिली (for मैथिल-). —(l. 2) Ñ1 illeg. for सौरिम्. —(l. 4) Ñ1 ह्यसकिता (for रलंकृता). Colophon. —*Sarga name*: Ś1 D1–7 सीतालंकारिकः; Ñ1 रत्नालंकारः; D6 सीताभरणदानम्. —*Sarga no.*: Ñ1 D3 om. Ś1 D4.7 41; D5 45; D6 39. —After colophon, D6 ins. रामाय नमः.]

—Ś1 Ñ1 D1–7 cont. further, D1 cont. after 893*:

895* अलंकृतां तु वैदेहीं दीप्यमानामिव श्रियम् ।
निरीक्ष्य पार्श्वे कौसल्या मुञ्चती वारि नेत्रजम् ।

[ (l. 1) D2 दि (for तु). —Ś1 D4 om. l. 2. —(l. 2) D4 निरीक्ष्यमाणा. Ñ1 मुञ्चती; D1 स्रवती; D7 मुंचती (for मुञ्चती).]

On the other hand, G2 M1 ins. after 18:

896* तत्र सीता महाभागा ववन्दे श्वश्रुपादयोः ।

19 ᵃ) Ś1 D6 विभूषितां; Ñ2 V1 B1.2.4 M4 तां भूषितां; B2 D1.2 (before corr.) तां विभूषितां (hypm.) (for तां भुजाभ्यां). —ᶜ) G2 कृपणां. —For 19ᶜᵈ, Ś1 Ñ V1 B D1–7 M4 subst.:

897* स्नेहान्मूर्ध्न्युपाघ्राय सीतां दुहितरं यथा ।

[ D2 सहर्षं (for स्नेहान्). Ś1 D4 मातां (for सीतां).]

—Ś1 Ñ1 D2–7 cont.:

898* गच्छन्तं वनवासाय त्वं राममनुगच्छसि ।
त्वामतोऽनुसमाधास्ये कार्यं ते हृदि सद्वचः ।

[ (l. 1) D4 गच्छंतं; D7 गच्छ तं (for गच्छन्तं). —(l. 2) Ñ1 त्वां पुत्रे (for त्वामतो). D2 अतस्त्वामनुशिक्ष्यामि (for the prior half).]

20 ᵇ) G1 सत्क्रियैः; M2 सत्कृतां (for सत्कृताः). G2 प्रियौः (sic) (for प्रियैः). —ᶜ) Dt1 नाभिमन्यंते; G1 M2 नव-मन्यंते (for नानु°). —ᵈ) Dg1 विनिपातगतं; M1 विनिपात-गता (for °गतं). —For 20, Ś1 Ñ V1 B D1–7 M4 subst.:

899* सत्कृता लालिताश्चैव वैदेहि प्राकृताः स्त्रियः ।
इत्थिमवमन्यन्ते भर्तारं न तु सत्स्त्रियः ।

[ (l. 1) B4 M4 संस्कृता. D4.5.7 ला(D7 रा)लिताश्च; M4 लालिताश्च. Ś1 D1–3.6 M4 [श्च]पि (for [श्च]ैव). B4 D4.7 वैदेहि. Ñ2 V1 D1.3.5 प्रा(D1 प्र)कृतस्त्रियः. —Ś1 D4.5.7 om. (hapl.) l. 2. —(l. 2) B1 इव (for अव-). B2 हरिद्र समनुप्राप्तं पति नानुव्रजन्ति च.]

—Ś1 Ñ1 D1.2–7 cont.:

900* न स्मरन्त्युपकारं च न प्रीतिं न च सौहृदम् ।
रूपयौवनसंसर्गात्स्वभावेन च दर्पिताः ।

[ (l. 1) Ś1 D4 हि (for first च). D4 संप्रीतिं (for न प्रीतिं). —(l. 2) D4 संसगा (for संसर्गात्). L (ed.) सुभावेन.]

—After 20, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.:

901* एष स्वभावो नारीणामनुभूय पुरा सुखम् ।
अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ।
असत्यशीला विकृता दुर्ग्राह्यहृदयाः सदा ।
युवत्यः पापसंकल्पाः क्षणमात्राद्विरागिणः ।

G. 2. 38. 20
B. 2. 39. 25
L. 2. 42. 5

स त्वया नावमन्तव्यः पुत्रः प्रव्राजितो मम ।
तव दैवतमस्त्वेष निर्धनः सधनोऽपि वा ॥ २१
विज्ञाय वचनं सीता तस्या धर्मार्थसंहितम् ।
कृताञ्जलिरुवाचेदं श्वश्रूमभिमुखे स्थिता ॥ २२
करिष्ये सर्वमेवाहमार्या यदनुशास्ति माम् ।
अभिज्ञास्मि यथा भर्तुर्वर्तितव्यं श्रुतं च मे ॥ २३
न मामसज्जनेनार्या समानयितुमर्हति ।
धर्माद्विचलितुं नाहमलं चन्द्रादिव प्रभा ॥ २४

न कुर्वं न कृतं विद्यां न दत्तं नापि संग्रहम् । [ 5 ]
स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ।
साध्वीनां तु स्थितानां तु शीले सत्ये श्रुते स्थिते ।
स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ।

[ (l. 2) Dg1 (before corr. as above) ब्रह्म (for ब्रह्मा्). Dm1 Ck कर्षंति; T G2 M2 दूर्षंति; Cm.g.t as above (for दूर्षन्ति). ※ Cr : दूरयति १ (दूर्षंति) विकृता भवन्ति दुःशीला भवन्तीत्यर्थः । ※ Dg1 T G Ck भवंति; Cr.g.t °हति (as above). T2 च (for [अ]पि).—(l. 3) T1.2 असत्कृतीस्त्; G M1-3 असत्कृतः शील°; Cm.g.k.t °त्कृताेन (as above). Dt1 Ct दुर्गा भद्रदया; T1.2 दुर्गा भद्रदया (for दुर्गा°).—(l. 4) Dt1 G2 Ck.t असत्यः (for सुकृतः). Dt1 Ct कृतमात्र-विरागिणः; Ck °त्रविरागिणः.—(l. 5) T2 G1 कृता; M2 कृतां. Dg1 Dt1 Dd1 Dm1 T2.3 G1 विद्या. T2 यति; Cm.t as above (for नापि). Dg1 Dt1 Dd1 Dm1 Cm.k.t संग्रहः; Cr.g °हं (as above).—(l. 6) G2 damaged from हि up to निता. T1 गृह्णंति. M2 सदा (for हि ताः).—(l. 7) Dg1 T1.2 G1.2 M2 हि; Dm1 तु-; Ct as above (for first तु). T1.2 G2 सत्ये शीले (by transp.). G2 हृते (for श्रुते). Dg1 T2 G1 (before corr.) सने; T1.2 G2 दने; G1.2 M1-3 Cg शमे; Cm.k.t as above (for स्थिते).—(l. 8) G2 [ऽ]वतिष्ठते.]
—Thereafter Dg1 ins. श्रीमते रामानुजाय नमः.

21 [a]) Ś1 Ñ1 B2-4 D2-7 तत्त्वया; Ñ2 बहुधा; B1 न त्वया (for स त्वया). V1 नावमन्येतः D1 नावमंतव्याः; T2 न वमंतव्य:.—[b]) T2 प्रव्राजिते (sic). Dt1 वनं (for मम). Ś1 Ñ1 D1.4-7 पुत्रो मम धनच्युतः; Ñ2 V1 B D2.3 M2 भर्ता पुत्रि (M2 °त्रो) धनच्युतः.—[cd]) Dt1 Dd1 Dm1 देवसमस्त्वेषः T1.2 G2 दैवतमेवैष. Ś1 Ñ V1 B D1-7 M2 दैवतं हि (D2 देव देहि [sic]) पतिः स्त्रीणां सधनो निर्धनोपि वा.—After 21, Ñ1 D1.4.5.7 ins.; Ś1 D6 ins. l. 1-2 only :

902* मद्वियोगकृतं दुःखं वनवासकृतं तथा ।
न संस्मरेद्यथा रामस्तथा कार्यं हि मैथिलि ।
प्रायशो ह्यत्र लोके च चलचित्ता हि योषितः ।
अनर्थं यान्ति निःस्नेहा सुखस्य इव वेगिताः । [ 5 ]
नैवाङ्गनानां दयितो नापि द्वेष्योऽस्ति कश्चन ।
सर्वमेवावलम्बन्ते लता गहनगा इव ।
शक्यो ग्रहीतुं पवनः शक्य एवाश्रितोऽनलः ।
न शक्यं हृदयं स्त्रीणां ग्रहीतुं चञ्चलं हि तत् ।
गुणवन्तं च भर्तारं निर्गुणं वापि मैथिलि ।
याः स्त्रियोऽभिप्रपद्यन्ते तासां लोका महोदयाः । [ 10 ]
पतिनामेह नारीणां स्वैरभोग्यो महासुखः ।
इह लोके यशो धर्माद्धर्मः प्रेत्य च वर्धते ।

[ (l. 1) Ñ1 -नां (for first -कृतं). D5 -नं (for second -कृतं).—(l. 2) D4 स्मरेत्तु वत्स (for संस्मरेद्यथा). D1 च (for हि).—(l. 3) Ñ1 [अ]त्र लोकेषु; D1 [अ]त्र लोकेषिन्; D1.2 [अ]त्रलोकेष.—(l. 4) D4 स्वार्थं (sic). D1.4 निःस्नेहा; D4 निःस्ने नः; D5 निःस्नेह (sic). Ñ1 D4 स्वस्य (for सुखस्य).—(l. 5) Ñ1 च (for [अ]पि.—(l. 7) D1.4.7 शक्यं (for शक्यो) and ग्रहणम् (for ग्रह्य). Ñ1 एवाश्रित-; D1.7 एवाश्रितं. D4 नरः; D7 नरक: (sic) (for ऽनलः). D5 शक्यः शक्य आश्रितं (for the post. half).—(l. 9) D4 हि (for च). D1.4 वापि (for वापि).—(l. 10) Ñ1 न; D6 हि (for ऽभि-).—(l. 11) D1 पतिनं हि; D6 स्त्रीनामिह (for पतिनामिह). D1 स्वैरभोग्यो; D6 °भुङ्क्ते; D7 °ग्यो (for स्वैरभोग्यो). D4.5.7 महागुरुः (for °सुखः).—(l. 12) Ñ1 D1 यशसा (for यशो). D1.4.5.7 वर्धते (for वर्धते).]

22 [ab]) G2 damaged from ता to धर्मा.—[c]) Dg1 Dt1 M2 कृतां (Dt2 °त्वा) जलिम्.—[d]) Dt1 Dd1 Dm1 T M2 स्थिताः. Ck अभिमुखस्थिता.—For 22, Ś1 Ñ V1 B D2.3.6 M2 subst.; D1.4.5.7 subst. l. 2 only for 22[cd] and then D1 ins. l. 1 repeating l. 2 thereafter :

903* इति श्रुत्वा समादिष्टा सीता भर्तृपरायणा ।
कृताञ्जलिः स्थिता प्रह्वा कौसल्यामिदमब्रवीत् ।

[ (l. 1) B2 श्रुत्वा (for श्रुत्वा). D2 सीता (for सीता).—(l. 2) V1 स्थितायैः (for स्थिता प्रह्वा).]

23 [a]) D1.4.7 [ए]तद् (for [अ]हम्).—[b]) D1.5.7 आर्ये. D4 अनुशासनं.—[d]) G2 कृतं (for श्रुतं). Dd1 reads च in marg.—For 23, Ś1 Ñ V1 B D2.3.6 M2 subst.; D1.4.5.7 subst. l. 2 only for 23[cd] :

904* आर्ये करिष्येऽभ्यधिकं शासनं ते यथास्थ माम् ।
अभिज्ञा ह्यस्मि सत्स्त्रीणां धर्माचारस्य सर्वशः ।

[ (l. 1) D2 [ऽ]भ्यधिकं; Ś1 D2.6 न (for ते). M2 यथात्वम् (for यथास्थ माम्).—(l. 2) D1 प्रतिज्ञा; D2 अभिज्ञो (for अभिज्ञा). Ñ1 B2 ह्यपि; M2 सर्व- (for ह्यस्मि). D2 ह्यारणां; D2.3 च स्त्रीणां (for सत्स्त्रीणां).]

24 [ab]) Dg1 Dm1 G2 [मा]मै (for [मा]मां). Dg1 T2 M2 Cv.r.k संमानयितुम् : Cm.g.t समा° (as in text). Dt1 अर्हति; M1 अर्हसि (sic). Ś1 V1 D1-3 M2 न मां पृथग्जन (V1 पृथक् * *) समामार्ये त्वं मंतु (V1 M2 गंतुः D1 बोद्धुः D6 [after corr.] ज्ञातुः D7 बोद्धु) मर्हसि; Ñ B पृथग्जनसमामार्ये मा मा (B1-3 [m. also] न मां; B2 मा मां; B4 किं मां) त्वं कर्तु (B4 वक्तु) मर्हसि.—[cd]) D2 धनाद् (for धर्माद्). B1.4 विचलितुं; Dg1 M2 हि चलितुं (M2 °तुं) (for

नातन्त्री वाद्यते वीणा नाचक्रो वर्तते रथः ।
नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥ २५
मितं ददाति हि पिता मितं माता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ २६
साहमेवंगता श्रेष्ठा श्रुतधर्मपरावरा ।
आर्ये किमवमन्येयं स्त्रीणां भर्ता हि दैवतम् ॥ २७
सीताया वचनं श्रुत्वा कौसल्या हृदयंगमम् ।
शुद्धसत्त्वा मुमोचाश्रु सहसा दुःखहर्षजम् ॥ २८

G. 2. 38. 29
B. 2. 39. 31
L. 2. 42. 30

विचलितुं ). Ś1 D4.6.7 रामाद्विचलिता. Ś1 Ñ2 V1 B D1.2.4.6.7 नालमहं ( by transp. ); Ñ1 D2.3 नालमत्र- ( for नाहमलं ); Ś1 Ñ2 V1 B D1.2.6 सुवांद् ( for चन्द्राद् ). Dg1 प्रभा; D1 प्रजा ( sic ).]

25 a) G2 damaged up to णी in वीणा. Ñ2 T2 G2 नातंत्रीर्( T2 °त्रिर् ). Dt1 D6 C1 विचते. —b) V1 B2 ( m. also as in text ) Dt1 Dd1 Dm1 D4 विचत्ते; D2 भ्रमते ( for वर्तते ). —c) B1 नासतिः; D2 न पतिः. Ś1 Ñ V1 B D1–7 M4 प्राप्नोति; M3 एधेत ( sic ) ( for एधेत ). —d) G2 शतात्मज. Ś1 Ñ V1 B D1–7 M4 नारी यद्यपि सुप्रजा( Ñ1 B1 D1.2 °जाः; D6 °भा ).

26 a) Dg1 reads हि in marg. —b) Ñ2 V1 B1 D ( except Dg1 ) M1.4 भ्राता; B4 भ्राता ( for माता ). —c) Ś1 V1 Dt1 Dd1 Dm1 D4.6.7 M4 तु; Ñ M2 च; B2.4 [ इ ]ह; D5 G1 प्र- ( for हि ). Ñ2 B दातेकः. —d) D6 नु ( sic ) ( for न ). Ñ2 B सुखस्यार्थे पतिः स्त्रियाः.

27 b) T1 श्रुतधर्म- ( sic ). —c) G1 कम् . G2 damaged from मे up to हि in d. T2.3 अवमन्येहं. —d) Dg1 Dt1 M2.3 स्त्रियाः; G1 स्त्रियो ( for स्त्रीणां ). —For 27, Ś1 Ñ V1 B D1–7 M4 subst. :

905* साहं सुखानां सर्वेषां दातारं दैवतं पतिम् ।
कथमार्येऽवमन्येयं यथान्याः प्राकृताः स्त्रियः ।

[ ( l. 1 ) M4 दातारं भर्तारं ( for सर्वेषां दातारं ). V1 पतिः ( sic ). —( l. 2 ) Ñ1 V1 B1.4 [ ऽ ]वमन्येतं; D5 न मन्येहं; D4.7 [ ऽ ]वमन्येयं ( for ऽवमन्येयं ). V1 B1 D1 M4 प्राकृत-. D6 स्त्रियाः. ]

—Ś1 Ñ1 D1.4–7 cont.; Ñ2 B cont. l. 1–4; V1 D2.3 M4 cont. l. 1 and 2 only :

906* किं च मन्ये देवतानामनुग्राह्यास्मि सांप्रतम् ।
यन्मे प्रकृतिकल्याणीं श्रद्धां वर्धयसे पुनः ।
भर्तुः प्रियनिमित्तं हि त्यजेयमपि जीवितम् ।
पाणिप्रदानसमयात्प्रभृत्येवं व्रतं मम ।
विप्रयुक्ता हि रामेण कन्दर्पेणेव रूपिणा । [ 5 ]
पतेयं पर्वताग्राद्वा विशेयं वा हुताशनम् ।
प्रमाणं तन्मया कार्यं यदग्निगुरुसंनिधौ ।
लब्धाङ्कुशुमः पाणिः पीडितो राघवेण मे ।
इतरा लब्धसत्त्वा हि स्त्रियो यौवनविभ्रमात् ।
भर्तारमवमन्यन्ते संश्रिताश्च कुबान्धवैः । [ 10 ]
नैव मज्जन्ति या वृत्ते नार्यः कर्मणि संवृते ।
विश्वास्याश्चलचित्ताश्च तासां शीलमसंस्थितम् ।
स्वयं कामाश्च वक्तव्यमार्येऽहं पतिदेवता ।
यथा भर्तारि वर्तिष्ये तथा श्रोतुमसि सज्जनान् ।
राज्यनाशं वने वासं त्वद्वियोगं च राघवः । [ 15 ]
प्रवर्तिष्ये तथा कर्तुं यथा नातिक्रमिष्यति ।

[ Ñ1 D1.4.6.7 om. l. 1 and 2. Ñ2 B transp. l. 1–2 and l. 3–4. —( l. 1 ) V1 D2.3 तु; M4 तु ( for च ). Ñ2 B देवतानामहं नूनम् ( for the prior half ). —( l. 2 ) B1 मां ( for मे ). Ñ2 B2 प्रियं; B1.2.4 बुद्धि ( for श्रद्धां ). V1 वर्धयेत्. —( l. 3 ) Ñ2 D1 अपि जीवितुं; D7 तथा जीवितं ( for अपि जीवितम् ). —( l. 4 ) Ñ1 [ प्र ]भृ तथा; Ñ2 D1.4.5 [ प्र ]भृ व्रतं ( for [ प्र ]भृ व्रतं ). —( l. 5 ) D7 वियुक्ता. D7 रूपणा ( sic ) ( for रूपिणा ). —( l. 6 ) D1 प्रविशेयुर् ; D4.6.7 प्रविशेयं ( for विशेयं वा ). —( l. 8 ) D1 ग्रथितः. —( l. 9 ) Ñ1 [ अ ]पि ( for हि ). D1 यौवनविभ्रमात्; D6 °संभ्रमात् . —( l. 10 ) D1 यत्र ( for मन्य- ). D1 कुलोचिताः; D4.6.7 कुलान्वयात् ( for कुबान्धवैः ). Ñ1 कुलस्थाश्च सर्वदा ( for the post. half ). —Ś1 D6 om. l. 11 and 12. —( l. 11 ) D1 नैव ( hypm. ). D4.7 वृत्तेर् ( for वृत्ते ). Ñ1 नान्यः ( for नार्यः ). Ñ1 नानुते; D1 संवृते ( for संवृते ). D4.7 अकार्यमलसंवृताः ( for the post. half ). —( l. 12 ) D4.7 स्थितम् ( for स्थितम् ). D4 असंस्थितं. —( l. 13 ) D1 वक्तव्यमार्येऽहं ( sic ). —( l. 14 ) Ñ1 D5 यथा ( for तथा ). D1.4.7 transp. यथा and तथा. D4.7 श्रोष्यसि( D7 °ते ). D5 सज्जनः ( sic ). —( l. 15 ) Ñ1 राज्यनाशो वने वासस् ( for the prior half ). D5 त्वद् ( for त्वद् ). —( l. 16 ) D1 वर्तिष्ये. D1.6 नित्यं ( for कर्तुं ). ]

—D4.7 further cont. :

907* राममेव गुरुं धर्मं भर्तारं दैवतं मम ।
आर्ये विद्धि न संदेहमत्र त्वं कर्तुमर्हसि ।

28 ab) Ś1 Ñ1 D1.4.6.7 तद्वचः ( for वचनं ). Ñ2 V1 B D2.3 M4 इति सीतावचः श्रुत्वा धर्म्यं हृदयनंदनं. —c) D1 शुद्धचित्ता. B4 विमुच्य बहु चाश्रुणि. —d) Ñ2 V1 B D2.3 M4 कौसल्या ( for सहसा ). B4 दुःखकर्षिता; D5 °वर्धनं ( for °हर्षजम् ). —After 28, Ś1 Ñ B D1.4–7 ins. :

908* परिष्वज्य च कौसल्या मैथिलीं जनकात्मजाम् ।
उवाच परमप्रीता प्रहृष्टप्रतिमाक्षरम् ।
अनाश्चर्यमिदं पुत्रि वचनं तव मैथिलि ।
या त्वं विशाले कुले जाता सत्यमिदोक्षिता ।
जनकस्य नरेन्द्रस्य मैथिलस्य महात्मनः । [ 5 ]
यशसश्च गुणानां च सदृशी त्वं विभूषणम् ।
अहं यशस्या धन्या च यस्यास्त्वं समुपस्थिता ।
गुणज्ञा च कृतज्ञा च धर्मज्ञा च यशस्विनी ।
निर्वृताहं भविष्यामि त्वया सह वनं गते ।
रामे राजीवपत्राक्षे अयोध्यां पुनरागते । [ 10 ]

G. 2. 38. 38
B. 2. 39. 33
L. 2. 42. 20

तां प्राञ्जलिरभिक्रम्य मातृमध्येऽतिसत्कृताम् ।
रामः परमधर्मज्ञो मातरं वाक्यमब्रवीत् ॥ २९
अम्ब मा दुःखिता भूस्त्वं पश्य त्वं पितरं मम ।
क्षयो हि वनवासस्य क्षिप्रमेव भविष्यति ॥ ३०
सुप्तायास्ते गमिष्यन्ति नव वर्षाणि पञ्च च ।
सा समग्रमिह प्राप्तं मां द्रक्ष्यसि सुहृद्वृतम् ॥ ३१

वनेषु खलु ते पुत्रि आत्मवमत्याप्रमत्तया ।
लक्ष्मणस्य च वीरस्य देवरस्य विशेषतः ।
एवं संदिश्य सीतां तु प्रशस्य च यशस्विनीम् ।
मुहूर्तमुपाघ्राय सस्नेहं कौसल्या राममब्रवीत् ।
नित्यं राघव सीताया भवितव्यं समीपतः । [ 5 ]
लक्ष्मणस्य च वीरस्य त्वयि भक्तस्य मानद ।
कर्तव्यमाप्रमादस्ते वने प्रचुरपाद्पे ।

[ (l. 1) D1 तु (for च). Ñ2 B तां वदे (for मैथिली). —(l. 2) Ś1 D8 -माल्लिताइए; Ñ2 B3 (m. also ).4 D2 -अभिताइए. —(l. 3) B4 om.; D1 वले (for पुत्रि). Ñ2 B3.4 गमने (for वचनं). —After l. 3, B3 ins.:

908 (A)* अयोनिजे महाभागे लक्ष्मिकाणि पुत्रिके ।

—(l. 4) Ñ1 शुभदाक्षम् (sic); Ñ2 B3 शुभा स्नवम्; B1 शुभसवम्; B4 शुभं स° (for शुभं सत्यम्). Ś1 D8 सीते स्वयमिवोदिता (for the post. half). —D3 om. (hapl.) l. 5-7. —(l. 5) Ñ2 reads नरेन्द्रस्य मैथिलस्य in marg. Ñ1 मिथिलस्य. D8 विशेषतः (for महात्मनः). —(l. 6) D1 वदांबर. B1 म्वुती. Ñ1 विमूल्या; D1 =भूतले. Ś1 D8 सीते स्वमति भूतलं; D6.7 सर्वलक्ष (D7 °क्षा) विभूषणे (for the post. half). —(l. 7) B4 संमुपाश्रिता; D1 समुपस्थितं. —(l. 8) B4 प्रतिज्ञा (for कृतज्ञा). —(l. 9) Ñ2 D1.3 निवृता. —(l. 10) Ś1 D6.8 राजीवपत्राक्षि; Ñ1 B1.2.4 राजीवताम्राक्षे (for °पत्राक्षे). Ś1 D8 अयोध्यां; Ñ2 B3 स्वर्गेह; B1 साकेते; B2.4 वनाय (for अयोध्यां). —(l. 12) D3 [ च ]व (for च). B4 वीरस्य. B1 स्वयमस्य (for देवरस्य). —(l. 13) D1 तां सीतां संदिश्य (for सीतां तु प्रशस्य). Ñ1 illeg. for तु प्रशस्य च. B1 transp. तु and च. B4 D8 यशस्विनी (for °नीम्). —(l. 14) Ś1 D8 [ उ ]पाघ्राय. B4 सस्नेहा. D1 सुबेलाभिरतम् (for कौसल्या रामम्). —(l. 15) D8 समीपगः. —(l. 16) Ś1 D1-2 भक्तस्य; B4 वीरस्य (for वीरस्य). Ś1 D8 स्वयं वीरस्य; B1 लक्ष्मणस्य च, D1.2 भक्तस्य त्वयि (by transp.); D4 त्वं वीरस्य (subm.); D7 त्वयि वीरस्य (for त्वयि भक्तस्य). —(l. 17) B4 प्रच्छन्नपाद्पे (for प्रचुर°).]

**29** ☞ The text in Ñ1 from प्राञ्जलि to तं वै in 2. 35. 916* is lost on missing fol.

D1 repeats 29ᵃ-30ᵇ consecutively. —ᵃ) D1 (first time).2 तां प्रांजलिम्; D2 कृतांजलिर् (for तां प्राञ्जलिर्). Ñ2 B3 G2 M1.4 अभिप्रेत्य; V1 Dt1 D1 (second time).2 अभिप्रेक्ष्य; D1 (first time) अतिक्रम्य; D3 अविप्रेक्ष्य (for अभि°). B1.2.4 तां तु प्रांजलिरभ्येत्य. —ᵇ) Ś1 B D1 (first time).4-7 स्ववस्थितां (B D7 °तः); Ñ2 सुरक्षितः; Dg1 तु सत्कृतां; Dm1 [ ऽ ]भिसत्कृतां. V1 D1 (second time)-2 M4 मातरं पुत्रगृद्धिनीं (D1 °गृधिनीं; D2 °गृध्नुनीं; D3 °गर्धिनीं).
—ᶜᵈ) Ś1 D8 [ ऽ ]पि धर्म्यं; Ñ2 B1-3 स धर्मं; B4 स्वधर्मः D1 (first time).2 स धर्म्यं; D4.7 च धर्म्यं (D7 °र्मं) (for परम°). B3 (m.) Dt1 Dd1 Dm1 T1 -धर्मात्मा; D1 (first time) धर्मज्ञां (for -धर्मज्ञो). V1 D1 (second time)-2 M4 अभिवाद्याब्रवीद्रामो धर्मज्ञो (D2 °ज्ञां) धर्मदर्शि (D3 °र्शिं) नीं. —After 29, Ś1 Ñ2 B D1 (after the first occurrence).2-7 ins.:

909* अम्ब सीतां समाश्रित्य यत्त्वं मामनुशासति ।
लक्ष्मणो दक्षिणो बाहुर्वामश्चैव मम मैथिली ।
न विहातुं मया शक्या कीर्तिरात्मवता यथा ।
गृहीतशरचापस्य कुतोऽस्ति हि भयं मम ।
अपि त्रयाणां लोकानामीश्वराद्वा शतक्रतोः । [ 5 ]

[ (l. 1) Ñ2 B4 अद्य; B2 अथ; D8 ननु (for अम्ब). Ñ2 सीता समाश्रित्य. Ñ2 B1-3 D2 तत्त्वं मा(B3 °मते)मनुशास्ति किं (B3 °षि क; D7 °स किं); B4 तदेवमनुशास्ति किं; D4.7 यत्त्वं मामनुशास्ति किं; D8 तत्र मामनुशास्ति किं (for the post. half). —(l. 2) Ś1 D4.6.7 चाप्येवं. —(l. 3) Ś1 D8 नैवं शक्यं, B1-3 (m. also) D8 न हि हातुं (for न विहातुं). B1 तथा (for यथा). —(l. 4) B1 [ ऽ ]स्मि (sic) (for ऽस्ति).]

**30** Ñ1 missing; D1 repeats 30ᵃᵇ (for both cf. v.l. 29). —ᵃ) B4 D1 (second time) अद्य मा (B4 मां). Ś1 D4.6.7 दुःखिता; T2 दुःखितं (for दुःखिता). B4 भूयस्त्वं (hypm.); Dt1 Dd1 Dm1 T1 G1.2 M1-3 भूत्वा (for भूस्त्वं). —ᵇ) Ś1 D4.8 पश्यतां; Ñ2 V1 B D1 (second time)-2 M4 शुश्रूष (B4 °षुः; D1 °षः); Dt1 पश्येस्त्वं; D7 पश्याद्य (for पश्य त्वं). —ᶜ) D8 क्रिया (for क्षयो). Ś1 Ñ2 V1 B D1-7 M4 [ ऽ ]स्य; Dg1 Dt1 Dd1 Dm1 T1 G1 M2 [ ऽ ]पि (for हि). M3 नववासस्य (sic). —ᵈ) Ś1 D4.6.7 भविष्यत्यचिरेण मे; Ñ2 V1 B D1-3 भविष्यति शिवे (Ñ2 D3 सुखे) न मे; D8 न चिरान्मे भविष्यति; M4 भविष्यति वरानने.

**31** Ñ1 missing (cf. v.l. 29). —ᵃ) Dt1 Dd1 समग्रमिह संप्राप्तं. —For 31, Ś1 Ñ2 V1 B D1-7 M4 subst.:

910* अस्य राज्ञः प्रसादेन वर्षाण्येतानि मे शुभे ।
सुखेनैव गमिष्यन्ति यथैकदिवसं तथा ।
स्वस्तिमन्तमरोगं मां पुनरभ्यागतं वनात् ।
स्वैरेव सुकृतैर्देवि ध्रुवं द्रक्ष्यसि मा शुचः ।

[ (l. 1) D2.4 वर्षाणि (for वर्षाणि). —(l. 2) Ś1 D8 शिवेनैव; B4 सुखेनेव (for सुखेनैव). D8 गमिष्यामि; D7 भविष्यति (for गमिष्यन्ति). D2.3 M4 यथैकदिवसं. D2 तदा. —(l. 3) D8 अथारोगं; D3 अरोगं वा (for अरोगं मां). D6.7 पुनरागतं. —(l. 4) B4 सुकृते (for सुकृतैः). Ś1 D2.8 पुण्यैः; D1 पुत्रे (for देवि) D8 मां ध्रुवं (for मा शुचः).]

एतावदभिनीतार्थमुक्त्वा स जननीं वचः ।
त्रयःशतशतार्धा हि ददर्शावेक्ष्य मातरः ॥ ३२
ताश्चापि स तथैवार्ता मातॄर्दशरथात्मजः ।
धर्मयुक्तमिदं वाक्यं निजगाद कृताञ्जलिः ॥ ३३
संवासात्परुषं किंचिदज्ञानाद्वापि यत्कृतम् ।
तन्मे समनुजानीत सर्वाश्चामन्त्रयामि वः ॥ ३४
जज्ञेऽथ तासां संनादः क्रौञ्चीनामिव निःस्वनः ।
मानवेन्द्रस्य भार्याणामेवं वदति राघवे ॥ ३५
मुरजपणवमेघघोषवद्-
दशरथवेश्म बभूव यत्पुरा ।
विलपितपरिदेवनाकुलं
व्यसनगतं तदभूत्सुदुःखितम् ॥ ३६

G. 2. 38. 50
B. 2. 39. 41
L. 2. 40. 41

इति श्रीरामायणे अयोध्याकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

32 Ñ1 missing (cf. v.l. 29). —a) B3.4 हि विनीतार्थम्; M4 इपपन्नार्थम् (for अभिनीतार्थम्). —b) Dg1 Dt1 Dd1 Dm1 उक्त्वा. B4 Dd1 D4.5.7 स जननीं; D3 राजसुतां. —cd) T2 ततः सह- (for त्रयःशत-). Dg1 G2 च; G1 [अ]भि- (for हि). M3 -शतार्धानि. Ś1 V1 D1-7 M4 अर्ध(D5 °ध)सहस्रतात्तत्र(D6 °तामास्तं; M4 °तं तत्र) (for °). Ś1 D6 [अ]न्या विमातरः; V1 [उ]पेत्य मा°; D2 [अ]पत्य मा°; D5 [उ]पेत्य मातरः; D7 [औ]पेत्य मा° (for [अ]वेक्ष्य मातरः). Ñ2 B ददर्शापि(Ñ2 °त्य)च मातॄणाम्(B3 °णां स)र्धसह शतानि सः(B4 च). ❀ Ct: त्रीणि शतानि शतार्धं च संख्या यासां ताः। प्रेक्षयसादेश आर्षः। ❀

33 Ñ1 missing (cf. v.l. 29). —d) Dd1 Dm1 स जगाद (for निजगाद). —For 33, Ś1 Ñ2 V1 B D1-7 M4 subst.:

911* समुपेत्य च मातॄस्ताः कृताञ्जलिरिदं वचः ।
उवाच रामो धर्मात्मा प्रश्रयावनतस्तदा ।

[(l. 1) Ñ2 B1.2 समुपस्थ; V1 समाभ्येत्य (for समुपेत्य). D4.5.7 तु (for च). B4 मातॄस्ताः.—(l. 2) B4 रामे (sic). B2 (also) प्रणयावनतः. V1 B1.4 तथा (for तदा).]

34 Ñ1 missing (cf. v.l. 29). —ab) T2 संवासात्. Dt1 Dd1 Dm1 अपि (for वापि). Ś1 Ñ2 V1 B D1-7 M4 संवासात्परुषः कच्चिद्विश्वासाद्वापराध्यति(M4 °ते). —c) Dt1 समुपजानीत; Cm.g समनुजानीत (as in text). Ś1 V1 D1-3.5.6 क्षेतव्यमपराधं(Ś1 D2.6 °द्धं) मे; Ñ2 B तत्तो(B1.4 तन्मे)पराधः क्षंतव्यः(B4 °व्यं); M4 तत्सर्वं क्षमतां मम. —d) D2 सर्वा (for सर्वांश्च). B1.3 आमंत्रयामि; B4 वै मंत्रयामि (for चामन्त्र°). —After 34, Ñ2 V1 B D1-3.5.6 M4 ins.:

912* अज्ञानाद्वा प्रमादाद्वा मया वो यदि किंचन ।
अपराद्धं तदद्याहं सर्वशः क्षमयामि वः ।

[(l. 1) B1 प्रमाणाद्वा. Ñ2 B4 वा (for वो). D1 कृतं भवति; D3.6 यद्(D3 °द्या)न्यदपि (for मया वो यदि).—(l. 2) V1 D1.3.6 अपराधं. D6 तदा (for तद्). B4 अद्याहं. D1 सर्वांश्च (for सर्वशः).]:

while Dg1 Dt1 Dd1 Dm1 T G M1-3 ins.:

913* वचने राघवस्यैतद्धर्मयुक्ते समाहितम् ।
शुश्रुवुस्ताः स्त्रियः सर्वाः शोकोपहतचेतसः ।

35 Ñ1 missing (cf. v.l. 29).—ab) T1 तु (for ऽथ). G2 संवादः (for संनादः). Dt1 Dd1 Dm1 T G M1-3 निस्वनः. Ś1 Ñ2 V1 B D1-7 M4 अथ जज्ञे महांस्तत्र तासां नृपतियोषिताम्. —c) Ś1 Ñ2 V1 B D1-7 M4 क्रौञ्चीनामिव संक्रंद(B3 संक्रंदन [hypm.]; B4 संक्रुद्धः; M4 चाक्रंद). —d) Ñ2 V1 B D1-7 ब्रुवति (for वदति).

36 Ñ1 missing (cf. v.l. 29).—ab) D1-3 मरुज-; T2 G2.3 M2.3 Cv.r.k मुरव-; Cm.g.t as in text (for मुरज-). D4.7 -पटह- (for -पणव-). Ś1 Ñ2 V1 B2-4 D1-7 M4 -वेणुनादितं (for -मेघघोषवद्). B1 द्विजवदनोपगतसामनादितं (for °). D5 दशार्थ (sic). Dg1 मुरजपणवमेघ घोषेण [व?] दसरथवेश्म बभूव यत्पुरा (sic).—c) Dg1 विलपति. Ś1 Ñ2 V1 B D1.2.4-7 M4 -परिदेवि(B1 °वेदि [metathesis]; D2 °देव)तस्वनैर्(B2 D6 °रैद्); D3 °देवनस्वनैर्; G2 °वेद(metathesis)नाकुलं.—d) Ś1 Ñ2 B1-3 D1.2.4-7 -भवैस; V1 B4 -भवेत्; D3 उवैस (sic); M4 -गतैस (for -गतं). Ś1 Ñ2 V1 B D1-7 M4 विनादितं(D5 °कं) (for सुदुःखितम्).

Colophon. Ñ1 missing.—*Sarga name*: Ś1 V1 D1-3.6 दशरथ(Ś1 om.)स्त्रीविलापः; Ñ2 B श्री(B1.4 om.)सीतासमादेशः; D4.7 वनप्रयाणः; D5 दंडकारण्यगमने वनवासप्रयाणः.—*Sarga no.* (figures, words or both): D4.6 om. Ś1 D4.7 42; Ñ2 B1.3.4 37; V1 Dg1 Dt1 Dd1 Dm1 S 30; B2 38; D1 94; D2 41; D5 46.—After colophon, D5 concludes with रामाय नमः; T2 M1 श्रीरामचन्द्राय नमः; G M2 श्रीरामाय नमः.

## ३५

G. 2. 39. 1
B. 2. 40. 1
L. 2. 43. 1

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः ।
उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ॥ १
तं चापि समनुज्ञाप्य धर्मज्ञः सीतया सह ।
राघवः शोकसंमूढो जननीमभ्यवादयत् ॥ २
अन्वक्षं लक्ष्मणो भ्रातुः कौसल्यामभ्यवादयत् ।
अथ मातुः सुमित्राया जग्राह चरणौ पुनः ॥ ३
तं वन्दमानं रुदती माता सौमित्रिमब्रवीत् ।
हितकामा महाबाहुं मूर्ध्न्युपाघ्राय लक्ष्मणम् ॥ ४
सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने ।
रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति ॥ ५
व्यसनी वा समृद्धो वा गतिरेष तवानघ ।
एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ ६

## 35

☞ Ñ1 missing up to तं व in 916* (cf. v.l. 2.34.29). Ś1 Dm1 begin with ॐ.

1 ᵃ) T1 damaged for अ. —ᶜ) D4.6.7 उपसंगम्य. —ᵈ) D4.5.7 दीनाश्च (by transp.); T2 चक्रुर्दीनं. D11 प्रदक्षिणां. —For 1, Ś1 Ñ2 V1 B D1–3.5 M4 subst.:

914* कृताञ्जलिस्ततो रामो लक्ष्मणश्च महायशाः ।
वैदेही चैव राजानं परिजग्मुः प्रदक्षिणम् ।

[(l. 1) B1 स्थितो (for ततो). B2 reads रामो in marg. D3 om. (hapl.?) from स up to क्षि in l. 1 of 915*. —(l. 2) Ś1 D2 प्रतिजग्मुः.]

2 Ñ1 missing (cf. v.l. 1). —ᵃ) M3 तां चापि समनुप्राप्य. —ᵇ) D11 Dd1 Dm1 G2 सह सीतया (by transp.). —ᵈ) Dg1 T1 G2 शोकसंतप्तो. T2 °संमूढो. —For 2, Ś1 Ñ2 V1 B D1–3 M4 subst.:

915* कृत्वा प्रदक्षिणं चैव प्रणिपत्यानुमान्य च ।
रामः शोकपरिम्लानां जननीमभ्यवादयत् ।

[D3 om. up to क्षि in l. 1 (cf. v.l. 1). B1 reads l. 1 in marg. —(l. 1) Ś1 V1 D1.2.3.5 M1 [प्र]णे (for [प्र]ण). V1 [अ]नुमन्य (sic); B1 [अ]नुनम्य; D4.6.7 M4 [अ]भिवाद्य (for [अ]नुमान्य). —D6.7 om. l. 2. —(l. 2) B1.2 M4 म्लानां; B4 म्ला(also म्ला)नीं; D1 म्लानो (for म्लानां). D5 [illegible].]

3 Ñ1 missing (cf. v.l. 1). Ñ2 B2 T2 om. (hapl.) 3ᵃᵇ; B1 reads in marg. 3ᵃᵇ. —ᵃ) Ś1 D2.3.5 M4 अन्वेव; V1 अथैव; B1 अन्वेवं; B3 अन्वेत्य; B4 अथैव (sic); D1 अंवेव; D4 अन्वेष्य; D7 अन्वेश (sic); Cv अन्वक्षं; Cr अन्वर्थं (for अन्वक्षं). Ś1 V1 B1.3.4 D1–3 चैनां (D3 °तां) (for भ्रातुः). —ᵇ) Ś1 V1 B1.2.4 D1.3–5 M4 कद; V1 D1.3 °सं]तीम्; D5 सौरंतीम्; D7 रुदताम् (sic) (for कौसल्याम्). D3 अस्यवादयत्; D4 अभ्यवादयत् (subm.) (for अभ्य°). —ᶜ) Ś1 Ñ2 V1 B D1–3 M4 ततोः; D11 अपि (for अथ). G2 सुमित्राय (sic) (for सुमित्रायाः). —ᵈ) T1.3 G2 ततः (for पुनः). Ś1 Ñ2 V1 B D1–3 M4 पादौ जग्राह लक्ष्मणः.

4 D2 om. (hapl.) from 4ᵃ up to l. 1 of 917*. —ᵃ) M2 वंदमाना. —ᶜ) T1 G2 M1–3 हितकामं. —ᵈ) Dg1 [अ]पघ्राय (for [उ]पा°). —For 4, Ś1 Ñ V1 B D1.3–7 M4 subst.:

916* तं वन्दमानं चरणौ सुमित्रा पुत्रमब्रवीत् ।
स्नेहान्मूर्धन्युपाघ्राय परिष्वज्य च पीडितम् ।

[(l. 1) Ñ1 missing तं व (cf. v.l. 1). D3 om. तं (subm.). V1 D1 वंदमानं (D3 °नौ) च (for तं वन्दमानं). Ś1 D1–7 रुदती (for चरणौ). —Ś1 D4–7 transp. the post. halves of l. 1 and l. 2. —(l. 2) Ś1 B1 D1 मूर्ध्नि (B4 °ध्नं [sic])पाघ्राय (subm.); B4 मूर्ध्नि मस्त° (for मूर्धन्युपा°). Ñ B2–4 परिरभ्य च; D2 परिष्वजत (sic); D7 परिष्वज्यत- (for परिष्वज्य च).]

5 ᵇ) T2 स्वनुरक्तः. —For 5, Ś1 Ñ V1 B D1–7 M4 subst.:

917* अरिष्टं गच्छ पन्थानं सह रामेण लक्ष्मण ।
शुश्रूष भ्रातरं ज्येष्ठं रामं लोकहिते रतम् ।
मत्पुत्रेण त्वया पुत्र तातिताहं सवान्धवा ।
यस्त्वं त्यक्त्वा प्रियान्दारान्गतो ह राममनुव्रतः ।

[D2 om. l. 1 (cf. v. l. 4). —(l. 1) D1.6 [illegible] (sic). —(l. 2) Ś1 D2 शुश्रूषुः; D4.7 शुश्रूषन् (for शुश्रूष). D1 ज्येष्ठं; D2 लोक- (for लोके). D3 रामे लोकहित हिते रि० (sic) (for the post. half). —(l. 3) D2 सुखिता. Ñ2 B2 वत्स; D3 तात (for पुत्र). D3 तातिता (sic). B1 D2 सबांधवा (sic). M4 (after corr. pr. m. as above) सबान्धवाः. —(l. 4) B2 त्यक्ता (sic). B2 D2 प्रिया दारा.]

6 ᵃᵇ) Ś1 Ñ V1 B D1–7 M4 समस्थो पितृ(Ñ2 B1 °ष [sic])मस्थो वा रामस्ते(V1 °स्य) परमा गतिः. —After 6ᵃᵇ, Ś1 Ñ V1 B D1–7 M4 ins.:

918* प्राणैरपि प्रियतरो ज्येष्ठो भ्राता गुरुश्च ते ।
तस्मात्त्वमप्रमत्तस्त्वं शरीरं परिपालय ।
विजने वसतोऽरण्ये सीतया रमतः सह ।

[(l. 1) Ñ B प्राणेभ्योऽपि. M4 गुरुश्च (for गुरुश्च). D2 मे (for ते). —(l. 2) B2 बलात्. D1 अस्मात्; D2 अस्मा (sic); D3 अस्मात् (for अस्मा). B1 प्रमत्तः; D1.6.7 प्रमत्त (sic) (for [अ]प्रमत्त). Ñ B1.3.4 प्रतिपालय. —(l. 3) D7 विजनो (for

इदं हि वृत्तमुचितं कुलस्यास्य सनातनम् ।
दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु च ॥ ७
रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ॥ ८
ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् ।
विनीतो विनयज्ञश्च मातलिर्वासवं यथा ॥ ९
रथमारोह भद्रं ते राजपुत्र महायशः ।
क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम वक्ष्यसि ॥ १०
चतुर्दश हि वर्षाणि वस्तव्यानि वने त्वया ।
तान्युपक्रमितव्यानि यानि देव्यासि चोदितः ॥ ११

G. 2. 39. 18
B. 2. 40. 12
L. 2. 43. 15

विजने ). Ñ B सवितत्र च; D4.5 वसत: सह ( D7 °स ); D6 मम लक्ष्मण ( for त्वत: सह ).]

—c) Ś1 Ñ V1 B D1–7 M4 पुत्र ( for लोके ). G2 धर्मे ( sic ).—d) Ś1 Ñ V1 B D1–2.6 M4 यं ( B1.2.4 यत् ; B3 D3 यम् ) त्वमिच्छसि सेवितुं; D4.5.7 यस्त्वं गच्छसि वने रत:.
—After 6, Ñ V1 B D1–8 M4 ins.; while Ś1 D8 ins. l. 2–3 only after 920*:

919* तस्मात्त्वया तत्परेण शुश्रूष्योऽयं गुणाकर: ।
भ्राता ज्येष्ठोऽप्रमत्तेन रामो राजीवलोचन: ।
त्वया पुत्र वने सेव्य: परिपाल्यश्च सर्वथा ।

[ (l. 1) V1 D1–2 M4 सदा ( for त्वया ).—(l. 3) Ś1 सर्वश:; B3 ( also ) सर्वदा ( for °था ).]

—After 6, T2 ins. 922*.

7 M4 om. 7.—For 7ab, Ś1 Ñ V1 B D1–7 subst.:

920* उचितं व: कुले वत्स ज्येष्ठभ्रात्रनुपालनम् ।

[ D4 उचितश्च ( sic ). Ś1 Ñ1 D4–7 पुत्र ( for वत्स ). Ś1 V1 D1–7 भ्रातु( D1.2 °तु )र्ज्येष्ठानुपालनं ( V1 D1–2 °वर्तनं ); Ñ1 भ्रातृज्येष्ठस्य शासने ( for the post. half ).]

—Thereafter Ś1 D8 ins. l. 2–3 of 919*.—c) Ś1 Ñ V1 B D1–7 तपश्चैव; Dg1 [ ता ]प यज्ञेषु ( for च यज्ञेषु ).—d) Ś1 D1–7 मृधेषि च ( Ś1 वा ); B1.2.4 मृधेष्वपि; Dt1 Dd1 Dm1 °षु हि ( for मृधेषु च ). D7 सत्यं शौचमनार्जवं.
—After 7, Ñ V1 B1.2.4 D1.2.3 ins., while Ś1 B3 D4.6.7 M4 ins. after 8:

921* इत्युक्त्वा लक्ष्मणं पुत्रं सुमित्रा राममब्रवीत् ।
त्वयापि पुत्र रक्ष्योऽयं लक्ष्मण: शत्रुकर्शन: ।
भक्तोऽनुरक्तोऽनुगतो भ्राता भृत्य: सुहृच्च ते ।
त्वया सर्वथा रक्ष्यस्त्वं यत्नेन राघव ।
एवमस्त्विति रामस्तां सुमित्रामभ्यभाषत । [ 5 ]
चक्रे कृताञ्जलिश्चैनामभिवाद्य प्रदक्षिणम् ।

[ (l. 1) D4 राममब्रवीत्. M4 लक्ष्मणं त्वेवमुक्त्वा सा रामं चाभ्यभाषत.—M4 om. l. 2.—(l. 2) Ñ1 D4 च ( for [ त्व ]पि ). B1.4 राम ( for पुत्र ).—(l. 3) Ñ1 तव ( for भक्तो ). Ñ1 illeg. from second नु up to मृ. Ñ2 B2 गुणवान् ( for ऽनुगतो ). D2 [ ऽ ]नुगतोनुरक्तो ( by transp. ). D2 वै ( for ते ). B3 ( m. also ) महावीर्य मृत्य एव च ( for the post. half ).—(l. 4) B4 [ त्व ]दं; D4.5.7 च ( for [ त्व ]या ). Ñ1 D4.5.7 त्वार्थं; Ñ2 B2 सर्वदा; D8 नैतत् ( sic ) ( for सर्वथा ). V1 च यत्नेन; M4 यत्नेन ( by transp. ) ( for °त्नेन ). D1.4 राघव.—(l. 5) B2 वर्तितां ( sic ). B4 D8 स्वां ( sic ) ( for तां ). Ś1 Ñ1 D1–7 M4 प्रत्यभाषत; V1 अभाषत ( subm. ) ( for अभ्यभाषत ).—(l. 6) D4 चक्रे ( sic ). V1 D4 [ ऽ ]नाम् ; D1 [ ऽ ]नम् ( for [ ऽ ]नाम् ). B2 अभिवाद्य ( sic ) ( for °वाद्य ).]
—After 7, G2.3 M2 ins.; T2 ins. after 6:

922* ज्येष्ठस्याप्यनुवृत्तिश्च राजवंशस्य लक्षणम् ।

—G2.3 M2 cont., Dg1 Dt1 D3 T G1 M2.3 ins. after 7; Dd1 Dm1 ins. after 8:

923* लक्ष्मणं त्वेवमुक्त्वासौ संसिद्धं प्रियराघवम् ।
सुमित्रा गच्छ गच्छेति पुन: पुनरुवाच तम् ।

[ D3 om. l. 1.—(l. 1) G2 चैवम् ( for त्वेवम् ). Dg1 Dt1 Dd1 Dm1 T2 M3 उक्त्वा; Ct as above. Dg1 Dm1 T2 G M1.2 सा; Ct as above ( for [ ऽ ]सौ ). G2 संसिद्धं; G3 संस्थितं ( for संसिद्धं ). T2 M2 अपि; M3 प्रवत- ( hypm. ) ( for प्रिय- ).—(l. 2) D3 इत्यमहुत्वी मृषा सुमित्रा पुत्रमब्रवीत.]
—Dm1 cont.:

924* गम्यतामर्थलाभाय क्षेमाय विजयाय च ।
शत्रुपक्षविनाशाय पुन: संदर्शनाय च ।

8 Ñ V1 B1.2.4 D1.2.3 om. 8. B3 reads 8 in marg.—a) D2 मा ( for मां ). D8 चैव ( for विद्धि ). B3 विद्धि मां ( by transp. ).—d) B3 गच्छ वत्स; D8 वत्स गच्छ ( for गच्छ तात ).—After 8, Ś1 B3 D4.6.7 M4 ins. 921*; Dd1 Dm1 ins. 923*.

9 c) Ś1 Ñ V1 B D1–3 M4 विनीतवदुपागम्य.

10 b) Dt1 महायशा:.—For 10cd, Ś1 Ñ V1 B D1–7 M4 subst.:

925* राजपुत्र नमस्तेऽस्तु युक्तोऽयं ते महारथ: ।
[ Ñ1 संयुक्तो; B3 सज्जोऽयं ( for युक्तोऽयं ).]

—c) Ś1 Ñ V1 B D1–7 अनेन त्वां नयि( Ś1 D4–7 हि ते )ष्यामि; M4 अनेन हि त्वा नेष्यामि.—d) Dt1 Dd1 Dm1 Ct वक्ष्यसे; G2 वक्ष्यसि. Ñ V1 B D1–3 M4 यत्र ते गंतुमीहि( V1 D1–2 M4 °प्सि )तं.

11 a) Ñ2 B च ( for हि ).—b) M4 वस्तव्यं हि. D7 G2 वनं ( for वने ). Ś1 Ñ2 V1 B D1.2.4 M4 त्वया वने ( by transp. ).—cd) D4 [ उ ]पक्रमितव्यानि. Dg1 ( m. ) यानि देव्या हि; Dt1 यानि देव्या म:; Dd1 देव्या त्वमसि; Dm1

तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
उपानयत धर्मात्मा गामर्घ्यमुदकं ततः ॥ १६
मृगपक्षिभिरासीनो मुनिभिश्च समन्ततः ।
राममागतमभ्यर्च्य स्वागतेनाह तं मुनिः ॥ १७
प्रतिगृह्य च तामर्चामुपविष्टं स राघवम् ।
भरद्वाजोऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा ॥ १८

चिरस्य खलु काकुत्स्थ पश्यामि त्वामिहागतम् ।
श्रुतं तव मया चेदं विवासनमकारणम् ॥ १९
अवकाशो विविक्तोऽयं महानद्योः समागमे ।
पुण्यश्च रमणीयश्च वसत्विह भवान्सुखम् ॥ २०
एवमुक्तस्तु वचनं भरद्वाजेन राघवः ।
प्रत्युवाच शुभं वाक्यं रामः सर्वहिते रतः ॥ २१

G. 2. 54. 24
B. 2. 54. 23
L. 2. 58. 24

---

D1.4 G1.2 M1 पत्र-; Ñ2 B1.2 वन्य-; Dm1( before corr. as in text ) D2 ( after corr. *sec. m.* marg. )कंद-; D4.7 पत्र ( for तत्र ). Ś1 V1 B D1-7 -फलाशनः( D4 °कः ); Dm1 G2 M1 -फलाशिनः( Dm1 °नाः[ sic ] ); M2 -फलाशिनौ.

16 a) V1 उपानयत्स. — d) D2 मर्घम् . Ñ2 V1 B D1.2 M4 तथा ( for ततः ). Ś1 D2-7 रामायार्घ्यमुपस्थितः. —After 16, Ś1 Ñ2 V1 B D1.2.2-7 M4 ins. :

1135* प्रतिगृह्य च काकुत्स्थमासनेनोदकेन च ।
न्यमन्त्रयत मूलैश्च फलैश्च फलभोजनः ।

[ (l. 1) D1.2 परिगृह्य. D4.5.7 तु ( for च ). —(l. 2) D2 lacuna for मूलैश्च. D2 मूलैश्च ( for फलैश्च ). Ś1 B2 D4-7 -भोजि( B2 D4.7 °ज )नं( D2 °नि [ sic ] ) ( for -भोजनः ). ];
while Dg1 Dt1 Dd1 Dm1 T G M1-3 ins. after 16 :

1136* नानाविधानन्नरसान्वन्यमूलफलाश्रयान् ।
तेभ्यो ददौ तप्ततपा वासं चैवाभ्यकल्पयत् ।

[ (l. 1) Dd1 वन- ( for वन्य- ). G2 -[ आ ]श्रयात्. —(l. 2) Dg1 G2 M1.2 [ अ ]पि; T1.2 M2 [ अ ]नु-; G1 [ अ ]मि- ( sic ) ( for [ अ ]भि- ). ]

17 D1,4.5.7 om. 17. Ś1 Ñ2 V1 B D2.3.6 M4 read 17 after 11. —a) Ś1 Ñ2 V1 B D2.3.6 M4 आसीनैर् ( for °नो ). —b) Ś1 Ñ2 V1 B D2.3.6 M4 वृतो मुनिभिरेव च. —c) T1 आनर्च; M2 अभ्येत्य; Ck as in text ( for अभ्यर्च्य ). —d) Dd1 Dm1 G2 M1.2 Ct [ आ ]गतो मुनिः; T1.2 M2 [ आ ]तिथि मुनिः; G1 [ अ ]पि तं मुनिः; G3 महामुनिः; Cg as in text ( for [ आ ]ह तं मुनिः ). Ś1 V1 D2.3.6 M4 सौम्य-भाषत वै मुनिः; Ñ2 B सौम्यमंत्रत( B2 स मन्त्र च ) तं मुनिः; Dt1 स्वागतं तु महामुनिः.

18 a) B1 प्रतिग्राह्य ( for °गृह्य ). Ś1 B1 Dt1 Dd1 Dm1 D4-7 तु ( for च ). Ś1 Ñ2 B2 D2-7 तां पूजाम्; V1 तामर्घ्यम् ( sic ). —b) D2 उपविष्टं ( इत ? ) ( for °विष्टं ). B2 G1 च; Dg1 marg. ( for स ). G2 M1 ( after corr. *sec. m.* as in text ) राघवः. —c) D1.2 भारद्वाजो. —d) M4 राजपुत्रम् ( for धर्मयुक्तम् ). Ś1 Ñ2 B Dt1 D4.5.7 हितं; Dg1 D2 तथा; M4 ततः ( for तदा ).

19 ab) Dd1 काकुत्स्थ, G2 M1 पश्यामि काकुत्स्थ ( by transp. ). Dt1 [ अ ]हमुपागतं; Ct as in text ( for त्वामि-हागतम् ). Ñ2 V1 B2-4 D1-3 M4 दिष्ट्यासि( B4 °ष्टि ) कुशली राम समाश्रममुपा( B4 °मुप[ sic ] )गतः; B1 दिष्ट्यासि कुशली राममाश्रमं समुपागतः; D1 दिष्ट्यासि कुशली राम आश्रमं समु-पागतः. —c) Ñ2 V1 B1.3.4 D1-3 M4 हि ते( D2 मे ) ( for तव ). Ñ2 V1 B1.3.4 D1-3 M4 पित्रा; Dt1 Dd1 Dm1 चैव ( for चेदं ). B2 न श्रुतं हि मया पित्रा. —d) Ś1 V1 D1.2.4.6.7 M4 मकारणात्( V1 D1.2 M4 °णे ) ( for °णम् ). —After 19, D2 ins. :

1137* यशस्त्वं श्लाघनीयं च देवानामपि सुप्रियम् ।
धन्यौ तथा च पितरौ सत्यधर्मपरायणौ ।
ययोस्त्वं तनयार्थाय जातो हृदयवल्लभः ।
सुव्रतः पितृवर्ती च यशस्वी दृढनिश्चयः ।

20 a) B2.3 विमुक्तोयं; G1 [ ऽ ]पि युक्तोयं ( for विवि-क्तोऽयं ). —b) Dm1 समागमः; T2 तु संगमे ( for समागमे ). Ś1 Ñ2 V1 B D1-7 M4 रमणीय( B1 °यं [ sic ] )श्च राघव( B4 D1 °वः [ sic ] ). —c) Dt1 पुण्यः. —d) Dm1 वसत्विह; T2 वसत्विव. —For 20cd, Ś1 Ñ2 V1 B D1-7 M4 subst. :

1138* गङ्गायमुनयोः पुण्यः संगमो लोकविश्रुतः ।

[ V1 पुण्य; D2 पुण्यो ( sic ); D6 चैव ( for पुण्यः ). D2 सर्व विश्रुतः ( for लोक° ). ]
—Then cont. :

1139* इह राम मया सार्धं वस त्वं यदि रोचते ।
वनं साधारणं हीदं तपोवननिवासिनाम् ।
इह त्वं रंस्यसे सार्धं सीतया लक्ष्मणेन च ।

[ (l. 1) D2 सं सीतया ( for राम मया ). D1 वसत्व ( sic ); D2 वसंते ( sic ) ( for वस त्वं ). B1 रोचसे. —(l. 2) Ñ2 B2-4 नवं- ( for वनं ). V1 D2.3 हीनं; M4 चेतत् ( for हीदं ). D6 -निवासिनां. —Ñ2 V1 B1 D1 M4 om. l. 3. —(l. 3) Ś1 D6 [ च ]व ( for त्वं ). ]

21 a) G2 सुवचनं. —c) M2 हितं ( for शुभं ). —For 21, Ś1 Ñ2 V1 B D1-7 M4 subst. :

1140* तमेवंवादिनं रामः कृताञ्जलिरभाषत ।
वसतोऽनुमहो मे स्यादिह ब्रह्मंस्त्वया सह ।

[ (l. 1) D2 मम ( for एवं- ). —(l. 2) V1 [ ऽ ]न गुणो ( for ऽनुग्रहो ). D2 मया ( for त्वया ). ]

G. 2. 54. 25
B. 2. 54. 24
L. 2. 58. 25

भगवन्नित आसन्नः पौरजानपदो जनः ।
आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः ।
अनेन कारणेनाहमिह वासं न रोचये ॥ २२
एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम् ।
रमते यत्र वैदेही सुखार्हा जनकात्मजा ॥ २३
एतच्छ्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः ।
राघवस्य ततो वाक्यमर्थग्राहकमब्रवीत् ॥ २४
दशक्रोश इतस्तात गिरिर्यस्मिन्निवत्स्यसि ।
महर्षिसेवितः पुण्यः सर्वतः सुखदर्शनः ॥ २५
गोलाङ्गूलानुचरितो वानरर्क्षनिषेवितः ।
चित्रकूट इति ख्यातो गन्धमादनसंनिभः ॥ २६
यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते ।
कल्याणानि समाधत्ते न पापे कुरुते मनः ॥ २७

---

22 $^{a}$) G2 इत (sic) (for इत). —For 22$^{ab}$, Ś1 Ñ2 V1 B D1–7 M4 subst. :

1141* इतस्तु विषयोऽस्माकमन्यादो तपतां वर ।

[ V1 इदं तु; B1 इह स्व-; D2 इति तु; M4 अतस्तु ( for इतस्तु ). D2 ins. श्री after इत. Ñ2 V1 तपसां वर. ]

—Ś1 V1 D1–7 M4 cont.; Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. after 22$^{ab}$ :

1142* सुदर्शमिव पश्यामि स्वजनस्य ममाश्रमम् ।

[ D4.7 आदर्शम् ( for सु° ). V1 सु- ( for स्व- ). Ś1 D4–7 पौरजानमिह वासतं ( D4.5 °मिममाश्रमं [ D5 °मं ]; D7 °मिव माश्रमं [ sic ] ) ( for the post. half ). Dg1 Dt1 Dd1 Dm1 T G M1–3 सुदर्शमिव मां भिक्षु मन्येऽहमिममाश्रमं. ]

—Ś1 D4–7 further cont. :

1143* अभ्यासे वर्तमानं मां श्रुत्वा दूरादिवागवः ।

[ D5.7 अभ्यासे. ]

—$^{cd}$) Ś1 Dm1 D4.6.7 आगमिष्यंति. Ś1 D4–7 मामपि प्रेक्षका जनाः ( for $^{d}$ ). Ñ2 V1 B D1–3 M4 आगमिष्यंति सुव्यक्तं द्रष्टुं मामिह बांधवाः. —$^{f}$) V1 D1.2 इमं; B4 इव ( for इह ). Ñ2 वासो; D2 वासे ( for वासं ). Ñ2 D1 रोचते.

23 $^{b}$) D7 वासस्थानमनुत्तमं. —$^{c}$) D1 रमेत्र तत्र; D7 रेमे च तत्र ( for रमते यत्र ). —$^{d}$) Ś1 D4.6.7 सुखेन; G2 सुखार्हो ( for सुखार्हा ). —For 23, Ñ2 V1 B D1–3 M4 subst.; Ś1 D6 ins. l. 2–3; D6 l. 3 after 23 :

1144* अन्यमाश्रममेकान्ते विविक्तं वक्तुमर्हसि ।
वसेयं यत्र वैदेह्या सहितो लक्ष्मणेन च ।
स्वजनेनापरिज्ञातो निरुद्विग्नः सुखी वने ।

[ ( l. 1 ) D1 विवक्तुं ( sic ). V1 D1–3 M4 द्रष्टुम् ( for वक्तुम् ). —D1 om. l. 2–3. —( l. 2 ) D6 वसेतं ( for °यं ). Ñ2 B तत्र ( for यत्र ); M4 सहितो वैदेह्या ( by transp. ). —( l. 3 ) V1 सुजनेन; D6 स्वजनैर् ( for स्वजनेन ). V1 [ अ ]तिविज्ञातो; D6 परिज्ञातो ( before corr. °ज्ञातो ) ( for [ अ ]परिज्ञातो ). Ś1 D6 निरुद्वेगः ( for °द्विग्नः ). B2–4 D2.3.5.6 मुने ( for वने ). ]

—Thereafter V1 B4 D1–3.6 cont. :

1145* वसेयं यत्र तन्मे त्वमुपदेष्टुमिहार्हसि ।

[ V1 यत्र तन्मेत्र ( with hiatus ); D2 तत्र मे स्वं मि ( with hiatus ) ( for यत्र तन्मे त्वम् ). V1 त्वम्; D1 मम ( for इह ). ]

24 $^{a}$) Ś1 Ñ2 V1 B D1–3.6 M4 इति रामवचः श्रुत्वा; D4.5.7 राघवस्य वचः श्रुत्वा. —$^{b}$) D4.5.7 महानृषिः. —$^{cd}$) Dt1 Dd1 Dm1 तु तद् ( for ततो ). D4.5.7 तस्य वाक्यं ( D5 कार्यार्थं च ) निशम्यैव ( D5.7 °रोक्ष्ये ) इमनुत्तमं ( D5 °रूपं ) वचोऽब्रवीत्. —For 24$^{cd}$, Ś1 Ñ2 V1 B D1–3 M4 subst. :

1146* ध्यात्वा मुहूर्तमेकाग्रो रामं वचनमब्रवीत् ।

[ V1 ध्यायेत्; M4 पश्यति ( for °ग्रो ). ]

25 $^{a}$) Ś1 D4–7 त्रियोजनम्; G2 दशक्रोशम्; M3 दश°° ( for दशक्रोश ). M3 lacuna for इतस्तात. Ñ2 V1 B D1–3 M4 इतश्चि ( Ñ2 °ति त्रि; D1 °तस्तु; D2 °°श्चि ) योजनादाम. —$^{b}$) Ś1 Ñ2 V1 B D2.4–7 T1.2 G1.2 M3–4 यत्र; Cr,m,g as in text ( for यस्मिन् ). Ś1 V1 B2 Dd1 D2.4 निवत्स्यति; D7 नि° ( for निवत्स्यसि ). —$^{c}$) Ś1 D4–7 नाग ( Ś1 D6 -वन ) संघु ( D6 °घु ) ष्टः; D1 -संवृतः पुण्यः ( for -सेवितः पुण्यः ). —$^{d}$) Dt1 Dm1 पर्वतः; M2 सर्वत्र ( for सर्वतः ). Dt1 Dd1 Dm1 शुभदर्शनः; M3 प्रियदर्शनं. Ś1 Ñ2 V1 B D1–7 M4 सर्वर्तु ( Ñ2 B °र्तस्य; D1.3.4.7 °र्तः; D6 °र्त तु [ sic ] ) सुखदः शिवः.

26 M4 om. 26$^{ab}$. —$^{a}$) Ś1 Ñ2 B D1.5.7 गोलांगूलाभिन ( B4 °मु ) र्दितो; V1 गोलांगूलाभिनुर्दितो; Dt1 °गुलानुचरितो; D2 °गुलाभिनर्दितो; D3.4 गोलांगूलाभिनर्दितो; D6 °लाभिन्न-र्दितो. —$^{b}$) V1 वानरैश्च; D2 नानापक्षि- ( for वानरर्क्ष- ). —After 26, D5–6.7 ( D4.5.7 subst. l. 1 for 29$^{ab}$ ) ins. :

1147* युक्तरूपमहं मन्ये तं वासं भवतः सुखम् ।
कपालशिरसा योऽसौ चिरमध्युषितः पुरा ।

[ ( l. 1 ) D4 इर्वितं; D7 वासं तं ( by transp. ). D5 शिवं ( for सुखम् ). —( l. 2 ) D6 चिरम् ( for चिरम् ). ]

27 $^{a}$) Ś1 Ñ2 V1 B D1–3.6 M4 यावद्धि; D4.5.7 यावंति ( for यावता ). D2 चित्रकूटः सः; D6 चित्रकूटस्य स्म ( hypm. ) ( for °कूटस्य ). —$^{b}$) Ś1 D4–7 [ अ ]वीक्षते; Ñ2 B D1–3 M4 पश्यति ( for [ अ ]वेक्षते ). V1 नरः शृंगे निवत्स्यति. —$^{c}$) Ś1 Ñ2 V1 B D1–3.6 M4 तावत्कल्याणमाप्नोति. —$^{d}$) Ś1 Ñ2 V1 B D1–7 M4 धर्मे च; Dt1 न मोहे ( for न पापे ). Ñ2 B मतिं ( for मनः ).

ऋषयस्तत्र बहवो विहृत्य शरदां शतम् ।
तपसा दिवमारूढाः कपालशिरसा सह ॥ २८
प्रविविक्तमहं मन्ये तं वासं भवतः सुखम् ।
इह वा वनवासाय वस राम मया सह ॥ २९
स रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम् ।
सभार्यं सह च भ्रात्रा प्रतिजग्राह धर्मवित् ॥ ३०
तस्य प्रयागे रामस्य तं महर्षिमुपेयुषः ।
प्रपन्ना रजनी पुण्या चित्राः कथयतः कथाः ॥ ३१
प्रभातायां रजन्यां तु भरद्वाजमुपागमत् ।
उवाच नरशार्दूलो मुनिं ज्वलिततेजसम् ॥ ३२
शर्वरीं भगवन्नद्य सत्यशील तवाश्रमे ।
उषिताः स्मेह वसतिमनुजानातु नो भवान् ॥ ३३
रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् ।
मधुमूलफलोपेतं चित्रकूटं व्रजेति ह ॥ ३४

G. 2. 54. 38
B. 2. 54. 38
L. 2. 58. 38

28 a) Ñ2 V1 B D1-3 M4 मुनयस्. B2 शतशो; M2 बहुशो (for बहवो). —b) B2.4 विहृत्य (for विहृत्य). V1 D4.5.7 M4 शरद: (for शरदां). —c) D1.2 दिव्यम् (for दिवम्). V1 स्वर्गं तत्तपसारूढा:. —d) Ś1 D6 मुहूर्तैकनिषेवणात्. ※ Cv : कपालशिरसा सह शरीरेण सहेति यावत् । कपालशिरसा मुनिना सह इत्यन्ये ॥ Cr : तपश्चरणे निरन्तरकपालासनेन प्रक्षीणत्वक्शिरोरुहतया कपालावशिष्टशिरसा सह सर्वे दिवमारूढा इत्यर्थः । कपालशिरस्केत्येतच्छरीरस्योपलक्षणम् ॥ Cg : कपालरूपशिरोयुक्तेन इति अध्याहृतशरीरपदविशेषणमित्येके । कपालमात्रावशिष्टं शिरो यस्मिन्निति तपोविशेषणमित्येके ॥ Ck : दुर्भिक्षसूतनूकपालवत् पलितेन शुक्लं शिरस्तथा मध्यमपदलोपीसमास: । तादृशेन शिरसा सह । ※ —After 28, D4.5.7 ins. :

1148* तत्र वावस काकुत्स्थ नानाविहगनादिते ।

[ D6 वा (for च). ]

29 a) Ś1 Ñ2 V1 B D1-3.6 M4 तं विवि(B1 °भ; D2 °+)क्तम्. —b) Dm1 निवासं. Ś1 Ñ2 V1 B D1-3.6 M4 वासं ते रघुनंदन. —For 29ab, D4.5.7 subst. l. 1 of 1147* and read after 26. —D5 om. 29c–34. —cd) Ś1 Ñ2 B D4.6.7 पुरुषव्याघ्र (for वनवासाय). B4 om. सह. V1 D1-3 M4 शंको चैतां(D2 °कां चेमां; M4 °कामेतां) परित्यज्य वसेह सहितो मया(V1 °नया). —After 29, Ś1 Ñ2 B D4.6.7 ins. :

1149* सर्वथा रंस्यसे राम तस्मिन्नाश्रममण्डले ।
लक्ष्मणेन सह भ्रात्रा सीतया चानघानघ ।

[ (L. 1) Ś1 नंस्यसे; B4 वस्यसे (sic) (for रंस्यसे). B2 °मंडले. —(L. 2) Ś1 D4.6.7 वैदेह्या चापि भार्यया (for the post. half). ]

30 D5 om. 30 (cf. v.l. 29). —ab) Ñ2 V1 B D1-3 M4 इत्युक्त्वा (for स रामं). B4 त्वं; D2 M2 तु (for तं). B1.2 D1 प्रि(B2 प्रि)यातिथि: (for °तिथिम्). Ś1 D4.6.7 एवमुक्त्वा तत: काले(Ś1 कंदे)भ(D6 °भा)रद्वाजोथ राघवं. —c) Ñ2 V1 B D1-3 M4 स्ना(V1 चा)नुजं चैव(B4 चापि). D4.7 च सह भ्रात्रा (by transp.) (for सह च भ्रात्रा). Ś1 D6 सहभार्यं सह भ्रात्रा. —d) ※ Cgp : प्रतिजग्राह उपचचार । ※ Dt1 ह्यर्चयत्; M4 राघवं (for धर्मवित्). Ś1 D4.6.7 महर्षि: प्रत्यपूजयत्.

31 D5 om. 31 (cf. v.l. 29). —For 31ab, Ś1 Ñ2 V1 B D1-3.6 M4 subst. :

1150* तस्य मुक्तव्रतस्तत्र तं मुनिं समुपासत: ।

[ V1 धर्मव्रतस्( for मुक्त° ). M4 तस्य ( for तत्र ). D2 समुपागत: (sic). Ñ2 B तदानीं( B2 °मां ) मुनिना सह (for the post. half). ]

—c) Ś1 Ñ2 V1 B D1-3.6 M4 जगाम; T2 प्रसन्ना (for प्रपन्ना). —d) Ś1 V1 D1-3.6 M4 विचित्रा:(D1 °त्रां) शृण्वत: कथा:(D1 °थां). —For 31, D4.7 subst. :

1151* ततो निवृत्तो दिवस: प्रवृत्ता रजनी शुभा ।
तां कथां मुनिना सार्धं चित्रां कथयतस्तदा ।

—After 31, Dg1 Dt1 Dd1 Dm1 S ins. :

1152* सीताद्वितीय: काकुत्स्थ: परिश्रान्त: सुखोचित: ।
भरद्वाजाश्रमे रम्ये तां रात्रिमवसत्सुखम् ।

[ (L. 2) G1 M1.2.4 पुण्ये (for रम्ये). M3 स रात्रिम्; M4 रजनीम् (for तां रात्रिम्). ]

32 D5 om. 32 (cf. v.l. 29). D4.5.7 om. 32–33. —a) Dt1 Dd1 Dm1 G1.2 M1 तु शर्वर्यां (for रजन्यां तु).

33 D4.5.6.7 om. 33 (for D4.5.7 cf. v.l. 32 and for D5, cf. v.l. 29). —a) Dd1 Dm1 G1 M1 शर्वरी; Cm.g.k.t as in text (for °रीं). —b) T1 त्वं; G2 सम् (for तव). Dd1 [ मा ]श्रमे (for °मे). —c) G1 वसतीम् (sic); G2 भवतिम् (sic). —d) T2 अनुजानाति (for °तु). —For 32–33, Ś1 Ñ2 V1 B D1.2.4 M4 subst. :

1153* तस्यां रात्र्यां व्यतीतायां संध्यामन्वास्य राघव: ।
उपतस्थे महर्षिं तं समुवाच ततो मुनि: ।

[ (L. 1) Ś1 तस्यां रात्रौ; D2 रात्र्यां तस्यां (by transp.). V1 D2 च(D2 +) व्युष्टायां. D1 M4 रात्र्यां च तस्यां व्युष्टाय(M4 °ष्टायां) (for the prior half). Ś1 चोपास्य (for अन्वास्य). Ś1 D6 सानुज:; V1 D1 लक्ष्मण: (for राघव:). —(L. 2) Ñ2 तु (for तं). Ś1 D6 उवाच च (for समुवाच). M4 महामुनि:. ]

34 D5 om. 34 (cf. v.l. 29). —a) D4.7 तस्यां रजन्यां; M1.2 रात्र्यां च तस्यां. —b) D4.7 महातपा:; G2 M1 [ S ]ब्रवीदिति. —d) Dd1 Dm1 गिरिं व्रज; D4.7 मधुसंयुत;

G. 2. 54. 40
B. 2. 54. 41
L. 2. 56. 40

तत्र कुञ्जरयूथानि मृगयूथानि चाभितः ।
विचरन्ति वनान्तेषु तानि द्रक्ष्यसि राघव ॥ ३५
प्रहृष्टकोयष्टिककोकिलस्वनै-
र्विनादितं तं वसुधाधरं शिवम् ।
मृगैश्च मत्तैर्बहुभिश्च कुञ्जरैः
सुरम्यमासाद्य समावसाश्रमम् ॥ ३६

इति श्रीरामायणे अयोध्याकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

---

G3 व्रजेति ह्यः Cv.g.k as in text (for व्रजेति ह). —For 34, Ś1 Ñ2 V1 B D1–3.6 M4 subst.:

1154* चित्रकूटमितो राम गच्छाशु सह सीतया ।
लक्ष्मणेन च विक्रम्य तत्र त्वं विहरिष्यसि ।
शुचिशीताम्बुवाहिन्या मन्दाकिन्योपशोभिते ।
मन्येऽहं तत्र ते वासं रम्ये स्वादुफलोदके ।

—(l. 1) Ś1 D6 गत्वा (for राम). Ś1 D6 रमस्व; D3 गत्वाशु (for गच्छाशु). —(l. 2) B3 om. च. Ś1 B3.4 D1–3 विक्रम्य; B1.2 M4 विक्र(B2 M4 °क्र)म्य (for °क्रम्य). —After l. 2, B1 ins. तत्र दे. —(l. 3) Ñ2 B रम्ये; D3 अन-; D4.7 शिव-; M4 शुभ- (for शुचि-). B2 मित-; B4 शीते (for शीत-). D4.7 M4 [उ]पशोभिते. —B3 om. l. 4. —(l. 4) Ñ2 B3 सं-; V1 तं (for ते). B4 रामं (sic) (for वासं).]

—After 34, Dg1 Dt1 Dd1 Dm1 D4.7 T G M1–3 ins.:

1155* वासमौपयिकं मन्ये तव राम महाबल ।
नानानगगणोपेतः किंनरोरगसेवितः ।
मयूरनादाभिरुतो गजराजनिषेवितः ।
गम्यतां भवता शैलश्चित्रकूटः स विश्रुतः ।
पुण्यश्च रमणीयश्च बहुमूलफलायुतः । [5]

[For l. 1, D4.7 subst. and read after line 5:

1155(A)* तत्रानुकूलं मन्येऽहं तवैव वसतीवरम् ।
शुचिशीताम्बुवाहिन्या मन्दाकिन्योपशोभितम् ।

—(l. 2) Dm1 -मृग-; Cm as above (for -नग-). G1 -गणोपेतं (for °तः). G1 -सेवितं. —(l. 3) Dt1 -नादाभिरतो; G1 -नादाभिरुतो (for -नादाभिरुतो). —(l. 4) G2 M1 यत्र वै (for भवता). D4.7 एष राम(D7 °म) महाशैलः (for the prior half). D4.7 शैले कृत; T3 M2 इतिश्रुतः; G1 शुचि कृतः (sic) (for स विश्रुतः). —(l. 5) D4.7 -फलोदकः (for -फलायुतः).]

35 a) D4.7 अत्र. Ñ2 B D4.5.7 कुंजरयूथाश्च. —b) B3 om. मृग-. Ñ2 D4–6 -यूथाश्च (D5 °श्च); B3 om. (for -यूथानि). Ñ2 B सर्वतः; V1 -श्रिताः; Dt1 Dd1 Dm1 चैव हि; D2 राघवः; D4.5 निर्वृताः; G3 चाभिते (sic) (for चाभितः). D7 करिणीसहिताः सुखं. —c) D3 विचरिष्यति (hypm.). Dg1 वनांतेस्मिन्. —d) Ś1 D6 तथा; B2 D4.5.7 तांस्त्वं (B2 °श्च) (for तानि). D2 द्रक्ष्यति (for °सि). B3 D2 राघवं (D2 °वः). —After 35, Dg1 Dt1 Dd1 Dm1 S G(ed.) ins.:

1156* सरित्प्रस्रवणप्रस्थान्दरीकन्दरनिर्झरान् ।
चरतः सीतया सार्धं नन्दिष्यति मनस्तव ।

[(l. 1) Dm1 गुहा-; G3 हरि-; Cm as above (for दरी-).]

36 D4.5.7 om. 36. —a) Ś1 Ñ2 V1 B D4.6 दात्यूह-; D2 इत्यूह- (sic); M4 नत्यूह- (sic) (for प्रहृष्ट-). B4 Dt1 Dd1 Dm1 T2 M2.3 Ct -कोयष्टिभ- (B4 °भ; Dt1 °भः [sic]; T2 M2.3 Cv.k °भ); Cr.m.g as in text (for -कोयष्टिक-). D3 -कोकनिः- (sic) (for -कोकिल-). —b) Dd1 Dm1 विनोदयंतं (for °नादितं तं). Dt1 विनोदयंतं च सुखं परं शिवं. —c) G1 वृंदैश्च (for मृगैश्च). —d) Ñ2 स्वरम्यम्. M4 पुरा समासाद्य. Ś1 Ñ2 B D1–3.6 सम् (for सम्). Dg1 Dt1 G3 [आ]श्रमे (for °मम्). V1 °मासाद्य रामसाश्रमं.

Colophon: D4.5.7 om. —*Sarga name*: Ś1 V1 B2.3 D2.6 भरद्वाजाभिगमनं (D6 °नः); Ñ2 B3 वनप्रवेशो भरद्वाजा(Ñ2 °जो [sic])भिगमनं; B1 D3 भरद्वाजाश्रमाभिगमनः (B1 °नं); D1 भरद्वाजाश्रमगमः. —*Sarga no.* (figures, words or both): B1.4 D3 om.; Ś1 58; Ñ2 53; V1 Dg1 Dt1 Dd1 Dm1 S 45; B2 43; B3 52; D1 110; D2 57; D6 55. —After colophon, D2 concludes with रामाय नमः; T2 श्रीरामचन्द्राय परमगुरवे नमः; G श्रीरामाय नमः.

# ४९

उषित्वा रजनीं तत्र राजपुत्रावरिंदमौ ।
महर्षिमभिवाद्याथ जग्मतुस्तं गिरिं प्रति ॥ १
प्रस्थितांश्चैव तान्प्रेक्ष्य पिता पुत्रानिवान्वगात् ।
ततः प्रचक्रमे वक्तुं वचनं स महामुनिः ॥ २
अथासाद्य तु कालिन्दीं शीघ्रस्रोतसमापगाम् ।
तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीम् ॥ ३
ततो न्यग्रोधमासाद्य महान्तं हरितच्छदम् ।
विवृद्धं बहुभिर्वृक्षैः श्यामं सिद्धोपसेवितम् ॥ ४

G. 2. 55. 5
B. 2. 55. 6
L. 2. 59. 5

## 49

☞ Ñ1 missing for Sarga 49 (cf. v.l. 1058*). D6.7 continue the previous Sarga. M1.2 begin with श्रीरामाय नमः.

1 ab) D6.7 उषित्वा तत्र रजनीं सुखमिक्ष्वाकुनंदनौ. —D5 om. 1cd. —cd) Dd1 Dm1 G2 [ ऋ ]ष (for [ ऋ ]ष). D6.7 अभिवाद्य ततो जग्मुर्मुनिमुद्दिश्य तं गिरिं. —For 1, Ś1 Ñ2 V1 B D1-3.5 M4 subst. :

1157* तौ तत्र रजनीमुष्य सुखमिक्ष्वाकुनन्दनौ ।
अभिवाद्य महर्षिं तौ दध्रतुर्गमने मनः ।

[ (l. 1) Ñ2 B ताभु( B3.4 °षु )षित्वा निशां तत्र (for the prior half). —(l. 2) B4 तदा (for महर्षिं). Ñ2 B मतिं (for मनः). ]

—B3 (marg.) cont.; Dg1 Dt1 Dd1 Dm1 D6.7 T G M1-3 ins. after 1 :

1158* तेषां चैव स्वस्त्ययनं महर्षिः स चकार ह ।

[ B3 तथ-; D6.7 तदा (for चैव). Dt1 Dd1 Dm1 transp. चैव and स्वस्त्ययनं. B3 महर्षिस्तु तदैव तान्; D6.7 जगाम स( D7 त ) यतां वरः (for the post. half). ]

2 B3 reads 2ab in marg. —a) B3 कृत्वा प्रेक्ष्यो-स्थितश्चैव; Dg1 Dt1 Dd1 Dm1 G2 M1.2 प्रस्थितान्प्रेक्ष्य तांश्चैव; D6.6.7 प्रस्थितान्प्रे( D7 °क्षी )क्ष्य चाप्येतान्. —b) B3 [ अ ]न्वयात्; Dt1 Dd1 Dm1 D6.6.7 [ औ ]रसान्; T1.2 Cgp [ अ ]न्वयात्; Cg as in text (for [ अ ]न्वगात्). —For 2, Ś1 Ñ2 V1 B1.2.4 D1-3.5 M4 subst.; B3 subst. for 2cd only :

1159* तौ प्रयातावभिप्रेक्ष्य भरद्वाजो महामुनिः ।
चित्रकूटस्य पन्थानमुपदेष्टुं प्रचक्रमे ।
राघव त्वमितो देशान्पश्यकावसथान्बहून् ।

[ (l. 1) D2.3 अभिवीक्ष्य. Ś1 D5 प्रयातां रजनीं तौ( D5 वै )क्ष्य (for the prior half). D3.5 भरद्वाजो. —(l. 3) B1.2.4 देशात्. V1 D1-3 M4 इतो देशात्तत्र त्वं (for the prior half). D3 बहून् (for बहून्). V1 आवसतान्; D5 आवसथान्. ]

—After 2, Dg1 Dt1 Dd1 Dm1 D6.6.7 T G M1-3 ins. :

1160* भरद्वाजो महातेजा रामं सत्यपराक्रमम् ।
गङ्गायमुनयोः संधिमासाद्य मनुजर्षभौ ।
कालिन्दीमनुगच्छेतां नदीं पश्चान्मुखाश्रिताम् ।

[ (l. 1) D5 [ ऽ ]मितौजा. —(l. 2) Dt1 आसाद्य (for °साद्य). D6.6.7 पुरुषर्षभौ. —(l. 3) D5 अथ (for अनु-). G1 °गच्छेथां. D6.6.7 मुखो श्रिता; G1 मुखाश्रुतां (for मुखाश्रिताम्). ]

3 D6.6.7 om. 3ab. —b) Dt1 Ct प्रतिस्रोतः समागतां. —After 3ab, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins.; while D6.6.7 cont. after 1160* :

1161* तस्यास्तीर्थं प्रचरितं पुराणं प्रेक्ष्य राघव ।

[ Dm1 T2 Cm प्रचरितं. D6 तस्यास्तु तीर्थं त्वरितं; D5 तस्यास्तीर्थं त्वरितं (sic); D7 तस्या स्तीर्थं त्वरितं (for the prior half). Dt1 Dd1 Dm1 प्रकामं (for पुराणं). D6.6.7 प्राप्य (for प्रेक्ष्य). Dg1 D6.6.7 G3 M2 राघवौ; T3 M1 राघव. ]

—d) Cr.t [ अं ]शुमतीं (as in text); Cm.g [ अं ]शु°. D6.7 तरतास्तु( D6 °स्तु )जलां नदीं. —For 3, Ś1 Ñ2 V1 B D1-3.5 M4 subst. :

1162* नातिदूरे समासाद्य तरेथा यमुनां नदीम् ।
हस्वोडुपं धावती सा हि नित्यं महानदी ।

[ (l. 1) Ñ2 B1.2.4 तरेत्तं; B3 तरेतां; D5 तरेथां; M4 यशोधा (for तरेथा). V1 तरेथां (sic) यमुनानदीं (for the post. half). —D3 read l. 2 twice. —(l. 2) B4 कुल्योडुप; D5 कुल्योडुपं; M4 महाजना. Ś1 B3 D1-3 धावती. ]

4 a) D6.6.7 तत्र (for ततो). —b) D5 हरितच्छदं. —c) Dt1 Dd1 Dm1 परी( Dd1 °रि )तं (for विवृद्धं). D5 (after corr. sec. m. as in text) वृक्षैः. —For 4, Ś1 Ñ2 V1 B D1-3.5 M4 subst. :

1163* तस्या नद्याः परे पारे नातिदूरे महाद्रुमः ।
सत्याभियाचनः श्रीमान्न्यग्रोधो हरितच्छदः ।
नानासत्त्वगणावासः श्याम इत्यभिविश्रुतः ।

[ (l. 1) M4 (after corr. sec. m. as above) तस्याः. —(l. 2) Ś1 तु चापि याचितः; Ñ2 B2-4 D1.2 सत्याभियाचितः ( D2 °नः ); D5 सत्यापि याचितः (for सत्याभियाचनः). —After l. 2, B3 ins. :

1163( A )* स्निग्धच्छायो महावृक्षः सर्वेषां हितकारकः ।

—(l. 3) B1 °कुलावासः; B4 D2 °गुणावासः. B4 [ अ ]ति (for [ अ ]भि-). D3.5 [ अ ]भितः( D3 °क ) श्रुतः. ]

—Thereafter cont. :

1164* सीतेयं तं नमस्कृत्य समभ्यर्च्य च पादपम् ।
अभियाचेत कल्याणी वरं यदभिकाङ्क्षितम् ।

G. 2. 55. 7
B. 2. 55. 7
L. 2. 50. 7

क्रोशमात्रं ततो गत्वा नीलं द्रक्ष्यथ काननम् ।
पलाशबदरीमिश्रं राम वंशैश्च यामुनैः ॥ ५

स पन्थाश्चित्रकूटस्य गतः सुबहुशो मया ।
रम्यो मार्दवयुक्तश्च वनदावैर्विवर्जितः ।
इति पन्थानमावेद्य महर्षिः स न्यवर्तत ॥ ६

उपावृत्ते मुनौ तस्मिन्रामो लक्ष्मणमब्रवीत् ।
कृतपुण्याः स्म सौमित्रे मुनिर्यन्नोऽनुकम्पते ॥ ७
इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ ।
सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम् ॥ ८
तौ काष्ठसंघाटमथो चक्रतुः सुमहाप्लवम् ।
चकार लक्ष्मणश्छित्त्वा सीतायाः सुखमासनम् ॥ ९

[ (l. 1) Ś1 D6 सीतापि ( for सीतेय ). V1 स-; M4 तै ( for तं ). V1 D1.3 सुसंप्लव; D3 सुसप्लव; M4 सन्यपर्व ( for नगप्लव ). M4 सुसप्लव ( for सन्यपर्व ). —(l. 2) B3 अभिवाचेतु. Ś1 D6 कल्याणी ( for °णी ). ];
while Dg1 Dt1 Dd1 Dm1 D4.5.7 T G M1–3 ins. after 4 :

1165* तस्मै सीताञ्जलिं कृत्वा प्रयुक्ताशिषः शिवाः ।
समासाद्य च तं वृक्षं वसेद्वातिक्रमेत वा ।

[ (l. 1) D4.5.7 तस्य ( for तस्मै ). Dm1 शिवां. Dt1 Ct [ आ ]शिषां शिवां. D4.5.7 च( D4 न्य; D5 नि )युक्तासिपोपि सा ( D5 च ) ( for the post. half ). —(l. 2) T G1.2 M1 तु ( for च ). M2 [ अ ]तिक्रमेति ( sic ). D4.7 वसतां न क्रमेयता; D5 वसित्वा प्रक्रमेद्वान् ( for the post. half ). ]

5 b ) B1 D1.7 द्रक्ष्यत; Dt1 Dd1 Dm1 प्रेक्ष्य च. B1 illeg. for काननम्. —c ) Dt1 Dd1 Dm1 शल्लकी- ( for पलाश- ). Ñ2 V1 B D1–3 M4 -वंश- ( for -मिश्रं ). —d ) D4.7 युतं; K( ed. ) रम्यं ( for राम ). Ś1 Ñ2 B D1–3.5 M4 -मधु( Ś1 Ñ2 B4 D6 °धु )काश्रवना( B3 M4 °णा )युतं; V1 -मधूकाश्रवणावृतं; Dt1 राम वन्यैश्च यामुनैः; G( ed. ) मधुकाश्रवनाकुलं.

6 a ) V1 गतं; Dd1 Dm1 यातः; D2 तत: ( for गतः ). M4 द्वार ( for मया ). Dt1 T2 गतस्य बहुशो मया. —V1 D1.3 M4 om. 6cd. —c ) M1 ( after corr. sec. m. ) रम्ये. Ś1 Ñ2 B D5–7 चाश्रमयुक्तश्च. —d ) Dt1 Dd1 Dm1 T G1.2 ( before corr. ) M2.3 द्रावै( T2 °वा [ sic ], M2 °व )र्वैश; Cm.g as in text ( for वनदावैर् ). Dg1 च वर्जितः ( for विवर्जितः ). Ś1 Ñ2 B D5–7 वनदोषैश्च( Ñ2 B °षैः स; D5–2.7 °षैर्वि ) वर्जितः. —ef ) M2 कृत्वं ( for इति ). Dt1 Dd1 Dm1 D4.7 G1 आदिश्य; D5 आविश्य ( for आवेद्य ). Dg1 Dt1 G1 संन्यवर्तत. Ś1 Ñ2 V1 B D1–3.5 M4 पंथानमुपदिश्यैवं( V1 D1.3 °देश्यैवं; B3 D3 °दिश्यैतं ) भरद्वाजो न्य( D5 °न्य )वर्तत. —After 6, Ś1 Ñ2 B D4–7 ins. :

1166* रामेण लक्ष्मणेनापि सीतया चाभिवादितः ।

[ B1 [ अ ]च ( for [ अ ]पि ). Ś1 सीतया चापि ( before corr. °पि च ) वंदितः ( for the post. half ). D4.7 रामेण सीतया वा ( D7 चा )पि लक्ष्मणेनाभिवादितः. ];
while Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

1167* अभिवाद्य तथेत्युक्त्वा रामेण विनिवर्तितः ।
[ Dt1 विनिवर्तितः. ]

7 a ) D1 उपावृत्ते; D2 उपावर्ते; D6 तपावृत्ते; G3 प्रयावृत्ते ( for उपावृत्ते ). —b ) V1 सुपदं तदन्तरं; D1–3 स्वमाश्रमपदं गतः; M4 गन्तव्याध्वानं गतः परं. —V1 D1–3 M4 om. 7c–8b. —c ) M3 तु ( for स्म ). Ś1 Ñ2 B D4–7 कृतपुण्योऽस्मि सौमित्रे. —d ) Ś1 Ñ2 B3 D4–7 मानुकंपते; Dm1 नानुकंपते; T2 नो न कम्पते. B1.2.4 मुनिर्यद्नुकंपते.

8 V1 D1–3 M4 om. 8ab ( cf. v.l. 7 ). —a ) B2 reads तौ in marg. —b ) D4.5.7 कथयंतौ ( for मन्त्रयित्वा ). Ś1 Ñ2 B D6 कथयंतौ यशा( B1 तप )स्विनौ. —c ) V1 D1–3 M4 सीतासहायौ काकुत्स्थौ( M4 कालिंदीं ). —d ) V1 यन्वानां; D1–3 M4 यमुनां ( for कालिन्दीं ). Ś1 Ñ2 B D4–7 तदा ( for नदीम् ). —After 8, D4.5.7 ins.; Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. l. 3–4 only :

1168* ते गत्वा किंचिदध्वानं ददृशुर्विमलां नदीम् ।
दिव्यामंशुमतीं नाम शीघ्रतोयप्रवाहिनीम् ।
अथासाद्य तु कालिन्दीं शीघ्रस्रोतोवहां नदीम् ।
चिन्तामापेदिरे सर्वे नदीजलतितीर्षवः ।
ततोऽब्रवीद्दाशरथिः सौमित्रिमपराजितम् । [ 5 ]
दिष्ट्या सरिदियं पुण्या यामुनो यत्र पर्वतः ।
न त्वस्मिन्पुरुषावासं पश्यामि पुरुषर्षभ ।
स त्वं कुरुष्व संघाटं सुखं येन तरेम वै ।
स वीरः शासनं भ्रातुः सर्वमप्रतिकूलयन् ।
निरीक्ष्य वहनं सर्वं गृहीत्वा सन्नमुत्तमम् । [ 10 ]

[ (l. 1) D5 कंचिद्. D5 अध्वाने. —(l. 3) Dt1 शीघ्रस्रोतस्विनी नदीं; T2 शीघ्रस्रोतसमापन्नां; G3 M1 शीघ्रस्रोतां महानदीं ( for the post. half ). D4.5.6.7 समासाद्य तु तां वीरौ तरङ्गावर्तमालिनीं. —(l. 4) Dt1 Dd1 Dm1 सर्वे ( for सर्वे ). D4.5.7 -तितीर्षवा. —(l. 5) D2 अपराजिते. —D2 om. l. 10. ]

—Thereafter D4.5.7 cont. l. 2 of 1171*.

9 a ) Dg1 T1.2 G2 M1 सु; T2 स ( sic ); G1 च; G2 M3 तं ( for सु- ). —For 9ab, D4.5.7 subst. and read after 9cd :

1169* बद्ध्वा लताभिर्वैत्रैश्च सुसंबद्धं दृढं ततः ।
प्रचक्रे काष्ठसंघाटं सौमित्रिर्विपुलं प्लवम् ।

[ (l. 1) D5 बद्ध्वा-; D5 शालैर् ( for बद्ध्वा ). D2 बहुबंद्धं; D4.7 सुसंबद्ध-; D5 सुखं बद्धं. ]

तत्र श्रियमिवाचिन्त्यां रामो दाशरथिः प्रियाम् ।
ईषत्संलज्जमानां तामध्यारोपयत प्लवम् ॥ १०
ततः प्लवेनांशुमतीं शीघ्रगामूर्मिमालिनीम् ।
तीरजैर्बहुभिर्वृक्षैः संतेरुर्यमुनां नदीम् ॥ ११
ते तीर्णाः प्लवमुत्सृज्य प्रस्थाय यमुनावनात् ।
श्यामं न्यग्रोधमासेदुः शीतलं हरितच्छदम् ॥ १२

G. 2. 55. 15
B. 2. 55. 23
L. 2. 59. 15

—Then cont. :

1170* कृत्वा च तं तदाचकथौ राघवाय महात्मने ।
लक्ष्मणो लक्षणोपेतो नदीं समवतारयन् ।

[ (l. 2) D2.5 नदीं. D5 समवतारितं; D4 °यत्; D5 °रिद्धं. ]
—After 9ab, Dg1 Dt1 Dd1 Dm1 T G1.3 M2.3 ins.; D2.4.5.7 cont. l. 2 only after 1168* :

1171* शुष्कैर्वंशैः समाकीर्णमुशीरैश्च समावृतम् ।
ततो वेतसशाखाश्च जम्बुशाखाश्च वीर्यवान् ।

[ (l. 1) Dt1 वन्यैः (for वंशैः). —(l. 2) Dg1 Dt1 Dd1 Dm1 T3 वेतसशाखाश्च; D2.4.5.7 वेतसशाखानां. D2.4.5.7 लतानां (D2 लतानो [sic]; D5 तालानां) चैव; T G1.3 जंद्° (for जम्बुशाखाश्च). ]

—c) Dm1 गत्वा; D7 छित्वा (sic). —d) D2 सीतार्थं; D4.7 वैदेह्याः (for सीतायाः).

**10** G2 M1 om 10. —a) Dg1 D2.4.5.7 T2.3 G3 M3 ततः (for तत्र). D5 श्रियमिवा°चिन्त्य (sic). —b) Ñ2 दशरथः (sic); M3 दाशरथिं (sic). —c) Dd1 M3 ईषत्स°. D2.4.5.7 ईषत्सलज्जा(D2 °ज्ज)मुपस्थ(D7 °स्थाप्य). —d) D5 यमध्यारोपयत्प्लवं; D4.7 समारोपयत प्लवं; D5 समध्यारोपयत्प्लवं. —For 9–10, Ś1 Ñ2 V1 B D1.2.6 M4 subst. :

1172* तत्र बद्ध्वोडुपं काष्ठैर्वेणुभिश्चापि तीरजैः ।
सीतामारोपयांचक्रे रामस्तत्र स्वयं तदा ।
परिगृह्य प्रियां बालां वेपमानां लतामिव ।
सीतामारोप्य रामोऽपि लक्ष्मणश्चाप्यरोहताम् ।

[ (l. 1) D2 कृत्वोडुपं; D6 बद्ध्वा; B1 काष्ठैर्. V1 ***बद्ध्वा काष्ठैर् (for the prior half). V1 वेणुभिश्च; B3 रेणुभिर्; D6 वारिभिश्च (for वेणुभिश्च). B1 चैव (for चापि). M4 transp. वेणुभिश्च and तीरजैः. —D6 om. (hapl.) l. 2–3. —(l. 2) V1 om. स्वयं तदा. —(l. 3) Ś1 (marg.) कृत्वा बालां; V1 प्रियं बालां; D1.2 M4 प्रियां (D2 °या) बालां (for प्रियां बालां). Ś1 कम्पमानां; V1 M4 लज्जमानां; D1 सहसा च; D2 कम्पमानां (for वेपमानां). —M4 om. l. 4. —(l. 4) D1 चापि रोहतां; D2 चाप्यरोहतां. Ś1 लक्ष्मणं चाप्यरोहयत् (for the post. half). V1 अभिरुह्य स्वयं रामो लक्ष्मणश्चाधिरोहतां. ]

—After 10, Dg1 Dt1 Dd1 Dm1 D2.4.5.7 T G M1–3 ins.; D1 ins. l. 5–10 only after 11ab :

1173* पार्श्वे तत्र च वैदेह्या वसने भूषणानि च ।
प्लवे कठिनकाजं च रामश्चक्रे सहायुधैः ।
आरोप्य सीतां प्रथमं संघाटं परिगृह्य तौ ।
ततः प्रतेरतुर्यत्तौ वीरौ दशरथात्मजौ ।
कालिन्दीमध्यमायाता सीता त्वेनामवन्दत । [5]
स्वस्ति देवि तरामि त्वां पारयेन्मे पतिर्व्रतम् ।
यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च ।
स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम् ।
कालिन्दीमथ सीता तु याचमाना कृताञ्जलिः ।
तीरमेवाभिसंप्राप्ता दक्षिणं वरवर्णिनी । [10]

[ (l. 1) Dg1 पार्श्वे. D4.7 तु तत्र; K (ed.) च तत्र (by transp.). D5 पार्श्वेषु तत्र. D2.4.5.7 वसनान् (D7 °ना-). —(l. 2) D7 ध्रुवं (for प्लवे). D4.7 कठिनकं चैव; D5 कठिनके छ(also क)ला (for कठिनकाजं च). Dt1 समाहितः; D5 महायुधैः (for सहायुधैः). —(l. 3) D5 संघाटं; D4 om.; D4.7 संघाटे (for प्रथमं). Dg1 transp. सीतां and प्रथमं. M3 परिगृह्य. D4.7 वै; G1 च (for तौ). D2 यत्तौ ततः (for परिगृह्य तौ). —G3 illeg. for l. 4–9. —(l. 4) Dm1 प्रचेरतुर्यत्तौ; D2 प्रयातु तौ वीरौ; D4.7 प्रयातुर्(D7 °तौ) वीरौ; D5 प्रययतुर्वीरौ (for प्रतेरतुर्यत्तौ). Dt1 धीरौ; D2.4.5.7 तदा (for वीरौ). —(l. 5) D1.2.4.5.7 कालिन्दीमध्यगा(D5 °गात्) सीता तां नदीमिदमब्रवीत्. —(l. 6) Dm1 T G M3 त्वा. D2 पार(ः)य; G1 तारयेत्; M3 पारयन् (for पारयेन्). D5 च; D7 चेद् (for मे). D1.2.7 M2 व्रतं पतिः (by transp.); D5 व्रतं पतिः; D5 व्रतं प्रति; T1 G1 पतिव्रतं. —(l. 7) T3 M2.3 त्वा. D1 यक्षे सहस्र-; D2.4.5.7 यक्ष्ये(D7 °क्षे) नदि- (D6 °दि) (for यक्ष्ये त्वां गो-). D1.2.4.7 सुराभारशतेन; D5 सुराभाण्डशतेन; M3 सुराशतघटेन (meta.) (for °घटशतेन). G3 सुराघटशतेन च (for the post. half). —(l. 8) D1.2.4.5.7 प्रत्यागते वनाद्रामे (for the prior half). —(l. 9) D1.2.4.5.7 कालिन्दीमथ तामेवमाशास्य तु (D4.7 तु) कृताञ्जलिः. —(l. 10) Dd1 Dm1 वरवर्णिनी. ]

**11** a) Ś1 Ñ2 V1 B D1.2.6 M4 तेन (for ततः). Ś1 B3 D6 प्लवेनाश्मवतीं; V1 D1 °नौचवतीं; B1.2 °नांशुमतीं; B4 D2 M4 °नौघवतीं; D2.4.5.7 °नांशुमतां (for °नांशुमतीं). —b) D2.4.5.7 तरंगावर्तसंकुलां. —After 11ab, D1 ins. l. 5–10 of 1173*. —c) Ś1 Ñ2 B D6 गहनां; V1 गहनां; D1.2 ग्रहनां; M4 गहनैर् (for बहुभिर्). —d) Ñ2 V1 B D1.2 M4 नेरुस्ते(D6 °** [om. hapl.]); D2 सरवतां; D4.7 संतीर्य; T3 सुतेरुर् (for संतेरुर्). V1 यमुनानदीं.

**12** a) Ś1 D6 संतीर्य; Ñ2 संकीर्णः; V1 B D1.2 M4 संतीर्णाः; Dt1 तेषु ते (for ते तीर्णाः). —b) Ś1 Ñ2 V1 B D1.2.6 M4 प्रणम्य यमुनां नदीं (V1 D1.2 ततः); D2.4.5.7 प्लवमुत्सृज्य(D4.7 °सृज्य तु) महद्वनं. —After 12ab, D2.4.5.7 ins :

1174* यमुनावनमित्येवं ख्यातं रविमनोहरम् ।
तदतीत्य वनं रम्यं नानाशकुनिनादितम् ।
ददृशुः पद्मगहनं तडागं बहुपुष्करम् ।
तत्र चास्वाद्य पानीयं मृणालान्पुष्कराणि च ।

G. 2. 55. 17
B. 2. 55. 25
L. 2. 59. 17

कौसल्यां चैव पश्येयं सुमित्रां च यशस्विनीम् ।
इति सीताञ्जलिं कृत्वा पर्यगच्छद्वनस्पतिम् ॥ १३

सुविश्रान्ताः पुनर्जग्मुस्तद्वनं संशितव्रताः ।                [5]
ततः प्रकृष्टमध्वानं गत्वा संकथया सुखम् ।

[ (l. 1) D5 -वानम् ( for -वनम् ). —(l. 2) D6.7 सर्वं ( for रम्यं ). D5 नानाकुलनिनादितं ( for the post. half ). —(l. 3) D6.7 यमुनातीरं. —(l. 4) D5 सत्यानि; D5 संस्नाय ( for चाप्लाव ). D2.3 सुगन्धे. —(l. 5) D5 संविश्रांताः पुनर्जग्मुस्तद्वनं संशितव्रताः. —(l. 6) D5 प्रकृतम्; D5 प्रकृष्टम्. D5 संकथया ( meta. ); D5 संगत्या. ]

—cd ) D5 जग्मुर्; D6.7 आसाद्य ( for आसेदुः ). D5 दृश्युर्; D7 जग्मुर् ( for शीतलं ). Ś1 Ñ2 V1 B D1.2.6 M4 सी( Ñ2 D1 सी )तच्छायं( V1 B2 °च्छायाः D5 °छायं ) समासेदुः( D1 °सीदुः ) श्यामं( D5 °म ) न्यग्रोधपादपं. —After 12, Dg1 Dt1 Dd1 Dm1 D2.4.6.7 T G M1–3 ins. :

1175* न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत् ।
      नमस्तेऽस्तु महावृक्ष पारयेन्मे पतिर्व्रतम् ।

[ (l. 1) Dg1 Dt1 Dd1 Dm1 T G2 स( Dt1 Dm1 स ) मुपागम्य; D6.7 तमुपासाद्य; D5 M2.3 तमुपासाद्य. Dt1 वाक्यमब्रवीत्; Dd1 Dm1 मिदमब्रवीत् ( for वाक्यम° ). —After l. 1, D5 reads 13cd for the first time, repeating it in its proper place. —(l. 2) D2.4.6.7 नमोऽस्तु ते; T2 नमस्ते तु; T3 नमस्ते तु ( for नमस्तेऽस्तु ). Dt1 पतिर्व्रते; Dd1 T2.3 G1 °व्रतं; G2 M1 व्रतं पतिः ( by transp. ); M2 व्रतं पतिः; Cm as above. D2.4 शिवो मे भव दर्शने; D6.7 शिवं नस्तव दर्शने ( for the post. half ). ]

—D2.4.6.7 cont. :

1176* चतुर्दशसु वर्षेषु व्यतीतेषु वने सुखम् ।
      अयोध्यां सर्वकामाढ्यां प्रविशेम पुनः पुरीम् ।

—Thereafter D5 cont. 1178*.

13 M4 om. 13ab. Ś1 V1 B D1.2.6 transp. 13ab and 13cd. —a ) V1 om.; D1.2.6 अपि ( for चैव ). Ś1 Ñ2 V1 B D1.2.6.8 जीवंतीः Dg1 Dt1 Dm1 D5 T2 M2 पश्येम( D5 °मः ); Dd1 D2.7 पश्यामः; G1 पश्यामि ( for पश्येयं ). —b ) M2 मनस्विनीं. Ś1 Ñ2 V1 B D1.2.6 पश्ये( V1 ∗∗ )यमिति मैथिली( B2 मे मतिः ); D2.4.6.7 सर्वांश्च( D5 पश्येयं ) ज्ञा( D7 ज्ञा )तिबांधवान्. —After 13ab, Ś1 Ñ2 V1 B D1.2.6 ins.; M4 ins. l. 2 only after l. 1 of 1178*.

1177* यथाचे तं ततोऽभ्येत्य द्रुमं सत्योपयाचनम् ।
      प्रदक्षिणमुपावृत्य ततस्ते प्रययुः पुनः ।

[ (l. 1) Ś1 Ñ2 यथाचेदं; V1 D1 यथाच तं; B1 यथा चेदं; B4 यथाचैनं. V1 तद् ∗ ∗ त्य; D1.2 ततश्चैव; D6 °त्यूचे ( sic ) ( for ततोऽभ्येत्य ). Ñ2 B2.3 श्यामं; D2 द्रुमे ( for द्रुमं ). Ś1 D6 न्यग्रोधं सत्यया( D6 °या )चनं ( for the post. half ). —(l. 2) D2.6 उपावृत्य ( sic ). Ś1 D6 तदा ( for पुनः ). D1.2 ततस्ते( D6 °स्तं ) तं ययुः शुभं ( for the post. half ). ]

—D5 repeats here 13cd ( cf. v.l. 1175* ). —c ) Ś1 Ñ2 B D6 अर्चयित्वा च( Ñ2 B °त्व ) तं सीता; V1 D1.2( first time ) M4 तं सीताभ्यर्चयित्वाथ( D5 °र्च्य यतेन ); D2.4.5 ( second time ).7 इत्यंजलि( D4 °लिं )कृत्य( D2.6 °त्वा ) सीता; D5 सीता समर्चयित्वाथ. —d ) Dd1 पर्यपृच्छद्; T1.2 प्रत्य°; Cv.r.m.g.k.t as in text ( for पर्यगच्छद् ). Ś1 Ñ2 B1–3 D6 याचनेदं कृतांजलिः; V1 B4 D1.2( first time ).6 M4 यथाचेदं कृतांजलिः; D2.5( second time ) तं यथाचे वनस्पतिं; D6.7 यथाचे तां( D7 तं ) वनस्पतिं.

—After 13, Ś1 Ñ2 V1 B D1.2.6 M4 ins.; while D5 cont. after 1176* :

1178* चिरं जीवतु मे वृद्धः श्वशुरः कोसलेश्वरः ।
      भर्ता मे देवरश्चैव जीवन्तु भरतादयः ।

[ M4 om. l. 2. —(l. 2) Ñ2 V1 B1.2 D1.6 देवरम्. ]
whereas D2.4.5.7 ins. after 13 :

1179* क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ ।
      प्रसन्नसलिलां दृष्ट्वाचरुर्यमुनां नदीम् ।

—D2.4.5.7 cont.; while Dg1 Dt1 Dd1 Dm1 T G M1–5 ins. after 13 :

1180* अवलोक्य ततः सीतामायान्तीमनिन्दिताम् ।
      दयितां च विधेयां च रामो लक्ष्मणमब्रवीत् ।
      सीतामादाय गच्छ त्वमग्रतो भरतानुज ।
      पृष्ठतोऽहं गमिष्यामि सायुधो द्विपदां वर ।
      यद्यत्फलं प्रार्थयते पुष्पं वा जनकात्मजा ।                [5]
      तत्तत्प्रदद्या वैदेह्या यत्रास्या रमते मनः ।
      गच्छतोस्तु तयोर्मध्ये बभूव जनकात्मजा ।
      मातंगयोर्मध्यगता शुभा नागवधूरिव ।
      एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् ।
      अदृष्टपूर्वां पश्यन्ती रामं पप्रच्छ साबला ।                [10]
      रमणीयान्बहुविधान्पादपान्कुसुमोत्करान् ।
      सीतावचनसंरब्ध आनयामास लक्ष्मणः ।
      विचित्रवालुकजलां हंससारसनादिताम् ।
      रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीम् ।

[ (l. 1) D2.4.5.7 तीरे निम्नगायाः; G1 यान्तीं तामनिंदितां; M1 आयांतीं तामनिंदितां ( for the post. half ). —(l. 2) D2.4.5.7 दयितं च विधेयं च ( for the prior half ). —(l. 3) D7 अग्रतः. Dg1 T1.2 G1.2 M1–3 भरताग्रज. ※ Cv.m.g : भरताग्रजेति बहुव्रीहिः ; Cr : भरतानुजेति बहुव्रीहिः । ※ —(l. 4) Dt1 Dd1 Dm1 [ऽ]नु- ( for ऽहं ). Dd1 सायुधो. D2.4.5.7 धन्विनां वर( D5 °र ) ( for द्विपदां वर ). —D2.4.5.7 om. l. 5–6. —T2 om. ( hapl. ). l. 6–7. —(l. 6) M2 तत्र ( for तत्तद् ). Dg1 M2 प्रदद्यात्; Dt1 Dd1 Dm1 प्रयच्छ. Dg1 वैदेहीं. G2 यथात्मा. —Dt1 om. l. 7–8. —(l. 7) D2.4.5.7 हि ( for तु ). G2 M1 बभौ च ( for बभूव ). —(l. 9) D5 पुष्पशोभिनी. —(l. 10) Dg1 अदृष्टपूर्वा; Dt1 °र्वं; Dd1

क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ ।
बहून्मेध्यान्मृगान्हत्वा चेरतुर्यमुनावने ॥ १४
विहृत्य ते बर्हिणपूगनादिते
शुभे वने वारणवानरायुते ।
समं नदीवप्रमुपेत्य संमतं
निवासमाजग्मुरदीनदर्शनाः ॥ १५

G. 2. 55. 20
B. 2. 55. 33
L. 2. 59. 20

इति श्रीरामायणे अयोध्याकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

Dm1 °कर्ता; D2.4.7 °पूर्वं; G M1 °पूर्वान्. M2 रामः प्रयत (for रामं ययाच). D2.4.5.7 जानकी (for सा कला). —D2,4,6,7 om. l. 11. —(l. 11) M2 स्वगीय-. Dm1 T2.3 G M1–2 कुसुमोत्करान्; Ct °त्करान् (as above). —(l. 12) Dt1 -वनं. T2 -संरम्भम्. —(l. 13) G2 M1 विचित्रमालुकां नीलां (for the prior half). —(l. 14) T1 moth-eaten for रेमे नन्द. T2 om. वेण्व. M2 स्म (for तदा). K (ed.) transp. सुता and तदा.]

14 ^a) Ś1 Ñ2 V1 B1.2.4 D1.3.6 M4 नीलमासाद्य तद्वनं; B2 नीलं वनमपश्यतां. —After 14^ab, D2.4.6.7 ins.:

1181* ददृशुर्मृगसंघातान्सलिलार्थमुपागतान् ।
[D4.7 दृष्टागतान्.]

—^c) Ś1 Ñ2 V1 B D1.3.6 M4 हत्वा तत्र मृगं मेध्यं (V1 मध्ये [meta.]); D2.4.6.7 तत्र हत्वा मृगान्कांश्चिद्. —^d) Ś1 Ñ2 B D6 खा(Ś1 D6 भु)त्वा त(B2 स)मुपभुज्य(Ś1 °भोज्य; B3 D6 °भुज्य; B4 °हाय) च; V1 D1.3 M4 पक्त्वा भुक्त्वा च राघवौ; D2.4.6.7 विविक्ते यमुनातटे. —After 14, D2.4.6.7 ins.:

1182* श्रान्तामालोक्य वैदेहीं तत्र वासं प्रचक्रिरे ।

[D4.6 वासं तत्रैव चक्रिरे (for the post. half).]

15 ^a) D4.6.7 विगाह्य. Dm1 -कुल- (for -पूग-). D4.6.7 -नादितं. —^b) Dg1 T2.3 G2.3 M1.2 वानरवारणायुते (by transp.); M3 वानरवारणायुते (sic). D4.6.7 शुभं वनं वानरवारणा(D6 °नरी)युतं. —^c) T1 समुपनदीवप्रम्. Dt1 Dd1 Dm1 स्मयं; Cg as in text (for संमतं). —^d) Dd1 अदीनदर्शनः; D6 अदीनसत्त्वः. —For 15, Ś1 Ñ2 V1 B D1–3.6 M4 subst.; D5 ins. after 15:

1183* विहृत्य तस्मिन्बहुपक्षिनादिते
वने यथेष्टं बहुयूथसेविते ।
ततो निवासार्थमुपाययुः शिवं
शुभं नदीतीरतटं समुच्छ्रितम् ।

[(l. 1) B2.4 विहृत्य. Ś1 (marg.) B1 D6 M4 -बहु- (for -बर्हि-). B1 -नादितो. —(l. 2) Ś1 D6 बहुसत्त्व-; V1 B2.4 D1–3.6 मृगायुत-. D5 -यावने. —(l. 3) V1 समं; B3 D1–3.6 शुभं (for शिवं). —(l. 4) Ñ2 B -तटं (for -तटं). V1 समन्वितं; B4 D1 समुत्थितं. Ś1 D2.6 -समुच्छ्रितं(D6 °श्रितं) शुभे(D5 वटे) (for -तटं समुच्छ्रितम्).]

Colophon. —*Sarga name*: Ś1 Ñ2 B D2.4–7 यमुनातीर(Ñ2 °पार; B3 °पार; D6 °कूल)नि(B1 om.)वासः; V1 D1 यमुनातीरगमनः; D3 यमुनातीराभिगमनः. —*Sarga no.* (figures, words or both): B1.4 D6 om.; Ś1 59, Ñ2 D4 54; V1 Dg1 Dt1 Dd1 Dm1 D7 S 55; B2 44; B3 53; D1 111; D2.5 58; D6 56. —After colophon, D6 concludes with रामाय नमः; T2 श्रीरामचन्द्राय नमः; G श्रीरामाय नमः.

## ५०

G. 2. 56. 1
B. 2. 56. 1
L. 2. 60. 1

अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरम् ।
प्रबोधयामास शनैर्लक्ष्मणं रघुनन्दनः ॥ १

सौमित्रे शृणु वन्यानां वल्गु व्याहरतां स्वनम् ।
संप्रतिष्ठामहे कालः प्रस्थानस्य परंतप ॥ २

स सुप्तः समये भ्रात्रा लक्ष्मणः प्रतिबोधितः ।
जहौ निद्रां च तन्द्रीं च प्रसक्तं च पथि श्रमम् ॥ ३

तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलम् ।
पन्थानमृषिणोद्दिष्टं चित्रकूटस्य तं ययुः ॥ ४

ततः संप्रस्थितः काले रामः सौमित्रिणा सह ।
सीतां कमलपत्राक्षीमिदं वचनमब्रवीत् ॥ ५

आदीप्तानिव वैदेहि सर्वतः पुष्पितान्नगान् ।
स्वैः पुष्पैः किंशुकान्पश्य मालिनः शिशिरात्यये ॥ ६

---

## 50

☞ Ñ1 missing for Sarga 50 (cf. v.l. 1058*). Ś1 begins with ॐ; M1.2 श्रीरामाय नमः.

1 ᵃ) B1 अत्र (for अथ). Ś1 D6 रात्रौ (for रात्र्यां). T1 M2 अतीतायाम्. —ᵇ) Ś1 Ñ2 (m.) B D6 सुप्त(B4 °स)सुप्तं; Dg1 अनुसुप्तं; Cg as in text (for अव°). Ś1 Ñ2 B D4.6.7 अमालस्यं(B4 °सुप्तं [sic]); V1 D1–3 M4 अनामिषतं (for अनन्तरम्). —ᶜ) G2 M1 बोधयामास शनकैर्. —ᵈ) Dt1 रघुपुंगवः (for °नन्दनः). —For 1ᶜᵈ, Ś1 Ñ2 V1 B D1–7 M4 subst.:

1184* राम उत्थापयामास लक्ष्मणं शनकैस्तदा ।

[Ś1 V1 D4–7 रामस्तु (for राम). V1 कुलैस्त; M4 तु शनैस्त (for शनकैस्त). V1 B4 तथा (for तदा).]

2 B2 om. 2ᵃᵇ. —ᵃ) Ś1 Ñ2 V1 B1.2.4 D1–7 M4 खगानां शृणु सौमित्रे. —ᵇ) B1 वल्गु. Ś1 Ñ2 V1 B1.3.4 D4.6.7 M4 वने; D1–2.5 वचः (for स्वनम्). —ᶜ) Ś1 Ñ2 V1 B D1.2.5.6 M4 भूयो; Dm1 D2.6.7 G1 काले (for कालः). —After 2ᶜ, D5 ins.:

1185* यदि लक्ष्मण रोचसे ।
न निद्राया ह्यहं(यं) कालः.

—ᵈ) Ś1 Ñ2 V1 B D1–2.6 M4 यदि लक्ष्मण मन्यसे.

3 ᵃ) Ś1 V1 D1 संसुप्तः; B1 Dt1 प्रसुप्तः; T2 समस्तः (for स सुप्तः). Ś1 Ñ2 V1 B1.2.4 D1–7 M4 स(V1 सं:) B1.3 D2.3.6.4 सु)सुप्तः; B2 सुसुप्तो; Dt1 तु ततो (for समये). V1 सीताः; B2 M4 भ्राता. —ᵇ) Dt1 समये (for लक्ष्मणः). —ᶜ) Cg तंद्रीं (as in text); Ct तंद्रीं. Ś1 Ñ2 V1 B1–3 D1.3–7 M4 क्लमं(D4.5.7 श्रमं) चैव; B4 ०चैव; Dg1 Dt1 Dd1 Dm1 च तंद्रीं च (for च तन्द्रीं च). D5 निद्राश्रमं चैव. —ᵈ) Dt1 Dd1 Dm1 G2 परिश्रमं (for पथि श्रमम्). Ś1 Ñ2 B D6 तं चैवाध्व(D6 °च)परिश्रमं; V1 D1–6.7 तथाध्वान(D1 °ध्वानं; D3 °ध्वान)परिश्रमं; M4 तं च वानपरिश्रमं.

4 ᵃ) G (ed.) अथ (for तत). Ś1 सहसा; Ñ2 V1 B D1–7 M4 सहिताः (for ते सर्वे). —ᵇ) Ś1 Ñ2 V1 B D1–7 M4 स्पृष्ट्वा च सलिलं शुचि(B2 बहु). —After 4ᵃᵇ, Ś1 Ñ2 V1 B D1–7 M4 ins.:

1186* उपास्य च शिवां संध्यां तत्रैवाभिप्रतस्थिरे ।

[Ś1 Ñ2 B D6 शुभां (for शिवां). V1 D1–5 [अ]थ (for [अ]भि-).]

—ᶜ) Dt1 ऋषिभिर्दृष्टं; K (ed.) ऋषिणादिष्टं. —ᵈ) M2 संययुः (for तं ययुः). —For 4ᶜᵈ, Ś1 Ñ2 V1 B D1–7 M4 subst.:

1187* चित्रकूटस्य पन्थानमासाद्य कृतनिश्चयाः ।
तत्र वासं समुद्दिश्य ययुः शीघ्रपराक्रमाः ।

[(l. 1) D6 अभ्यास्य (for आसाद्य). D1.2.4 M4 कृतनिश्चयः. —(l. 2) D6 ततो (for तत्र). D1.2 ययौ; M4 ततः (for ययुः). D1.2.6 (before corr. as above) M4 शीघ्रपराक्रमः.]

5 ᵃ) Dg1 संप्रस्थिते. —For 5, Ś1 Ñ2 V1 B D1–7 M4 subst.:

1188* अचिरेण समासाद्य ततस्तं चित्रपादपम् ।
चित्रकूटवनं रामः सीतां वचनमब्रवीत् ।

[(l. 1) Ś1 Ñ2 B तत्र; D6 तद् (sic) (for तं). —(l. 2) D2.4.5.7 M4 चित्रकूटं ततो (for °कूटवनं).]

6 ᵃ) M2 सुदीप्तान्. M1 इह (for इव). Dt1 Dm1 G1.3 M3 वै(M3 ॰)देहि. —ᵇ) T2 G1.3 द्रुमान् (for नगान्). —ᶜ) M2 पद्वैः (corrupt) (for पुष्पैः). Dg1 किंशुकान्. —Dg1 reads 6ᵈ in marg. —ᵈ) G2 मलिनः; M1 मौलिनः; Cv °लिनः; Cm.g.k.t as in text (for मालिनः). —For 6, Ś1 Ñ2 V1 B D1–7 M4 subst.:

1189* पश्यैतान्पुष्पितान्सीते मालिनीं सरितं प्रति ।
शिशिरात्ययदग्धानिह प्रदीप्तानिव किंशुकान् ।

[(l. 1) Ñ2 B1–3 [आ]क्रान्; D5 [अ]पून्; D7 [इ]मान् (for [इ]तान्). D6 om. (hapl.) पुष्पितान्. B4 पश्यान पुष्पिते सीते (for the prior half). Ñ2 मालिनी (for मालिनीं). —(l. 2) D6 संदग्धान् (for दग्धानि). Ñ2 V1 B D1–2.6 M4 शिशिरात्यये विप्रासाद्य(Ñ2 B1–3 च[B2.3 तु]दीप्तांश्च) (hypm.); D4.7 शिशि(D7 om. [hapl.] शि)रात्यये प्रदीप्तान् (for the prior half). D6 इह (for इव).]

—Then all the above MSS. cont.:

पश्य भल्लातकान्फुल्लान्नरैरनुपसेवितान् ।
फलपत्रैरवनतान्नूनं शक्ष्यामि जीवितुम् ॥ ७
पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण ।
मधूनि मधुकारीभिः संभृतानि नगे नगे ॥ ८
एष क्रोशति नत्यूहस्तं शिखी प्रतिकूजति ।
रमणीये वनोद्देशे पुष्पसंस्तरसंकटे ॥ ९
मातंगयूथानुसृतं पक्षिसंघानुनादितम् ।
चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम् ॥ १०
ततस्तौ पादचारेण गच्छन्तौ सह सीतया ।
रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ॥ ११

G. 2. 56. 18
B. 2. 56. 12
L. 2. 60. 18

1190* कर्णिकारवनं चापि पश्य मन्दाकिनीमनु ।
दीपितं रुचिरैः पुष्पैः प्रदीप्तैः काञ्चनैरिव ।

[ (l. 1) $V_1$ $D_{1-3,7}$ चाह; $M_4$ चात्र ( for चापि ). —(l. 2) $V_1$ $D_{1,2}$ शोभितं; $D_3$ दीपितं; $D_6$ दीपितं ( for दीपितं ). $\tilde{N}_2$ $B_2$ रुचिरं. $D_{4,5,7}$ $M_4$ वृक्षैः ( for पुष्पैः ). $D_{1,2}$ प्रदीप्तैः; $D_4$ प्रदीप्तं. $B_4$ * * * र ( for काञ्चनैर् ). ]

7 $^a$) $B_2$ भल्लातकान्; $D_1$ भिल्लातकान् ( hypm. ); $D_4$ भैल्ल°; $T_{2,3}$ पल्ला°; $G_1$ फुल्ला°; $G_3$ पल्ला°; Cv भल्ल°; Cg.k as in text ( for भल्लातकान् ). $Ś_1$ $\tilde{N}_2$ $V_1$ B Dg1 Dt1 Dd1 Dm1 $D_{1,3-7}$ $T_3$ $G_2$ M बिल्वान्; $D_6$ सीते ( for फुल्लान् ). —$^b$) $G_{1,3}$ उपनिषेवितान् ( for नरैरनुपसे° ). $Ś_1$ $\tilde{N}_2$ $V_1$ B $D_{1-7}$ $M_4$ पनसा( $B_2$ °नस्यो )स्तिन्दु( $\tilde{N}_2$ $B_{3,4}$ स्तिल; $D_7$ स्तिन्दु ) काश्मर्य( $D_{4,5,6,7}$ कानपि ); $G_2$ $M_1$ वानरैरुपशोभितान्. —$^c$) Dt1 Dd1 Dm1 फलपुष्पैर्. —$^d$) Dg1 Dt1 Dd1 Dm1 $T_{1,2}$ $M_3$ Cv.r.t शक्ष्यामः Cm.g.k °मि ( as in text ). Dt1 जीवितं. —For $7^{cd}$, $Ś_1$ $\tilde{N}_2$ $V_1$ B $D_{1-7}$ $M_4$ subst. :

1191* फलभारनतांश्चैव वनान्यानफलपादपान् ।

[ $B_{1,3,4}$ $D_2$ फलभारानताञ्; $D_{4,7}$ फलभारनतेश्च. $V_1$ $D_{1-6,7}$ $M_4$ [ च ]ति ( for [ च ]व ). $Ś_1$ $D_6$ शुभपादपान्. $D_{4,5,7}$ वानरैर् ( $D_6$ नरैर्नु )पसेवितान् ( for the post. half ). ]

—Then all cont. :

1192* शक्यमत्र फलैरेव जीवितुं तनुमध्यमे ।
अहो स्वर्गोपमं प्राप्ताश्चित्रकूटमिमं वयम् ।

[ (l. 1) $D_{4,5,7}$ इति ( for अत्र ). $D_6$ वने ( for अत्र ). $\tilde{N}_2$ जीवितं. —(l. 2) $V_1$ चित्रकूटवनं; $D_{4,7}$ चित्रकूटमिदं. $\tilde{N}_2$ $B_2$ वने; $D_6$ शुभे ( for वयम् ). ]

8 $^a$) $D_1$ पश्च ( for पश्य ). $B_2$ लोलप्रमाणानि ( meta. ). —$^b$) $D_1$ लंबमानि च लक्ष्मणः ( sic ). —$^c$) $Ś_1$ $B_3$ $D_6$ $M_4$ चितानि; $\tilde{N}_2$ $B_{1,2,4}$ चितानि ( for मधूनि ). $Ś_1$ $\tilde{N}_2$ $V_1$ B $D_{1-3,6}$ $M_4$ चित्रकूटेस्मिन् ; $D_{4,5,7}$ मधुमासेस्मिन् ( for मधुकारीभिः ). —$^d$) $D_1$ संभृतानि; $D_6$ संपूर्णानि; $T_2$ सुभृतानि ( for संभृतानि ). $D_1$ नगे वने; $D_{2,3}$ नगोत्तमे( $D_3$ °मैः ) ( for नगे नगे ). $Ś_1$ $\tilde{N}_2$ $B_{1-3}$ $D_6$ $M_4$ मधूनि मधुपैः खगैः; $B_4$ न भ्यूतानि मधुव्रतैः.

9 $^a$) $Ś_1$ $\tilde{N}_2$ $V_1$ B $D_{1-7}$ $M_4$ असौ( $D_{4,5,7}$ एष ) कूजति; Dm1 एवं क्रोशति. $Ś_1$ $\tilde{N}_2$ $V_1$ B Dg1 Dd1 Dm1 $D_{1-7}$ दात्यूहस्; Cm.g as in text ( for न° ). —After $9^{ab}$, $Ś_1$ $\tilde{N}_2$ $V_1$ B $D_{1-7}$ $M_4$ ins. :

1193* तं चोपहसतीवायं कूजन्ते जलकुक्कुटाः ।
परपुष्टस्तं श्रुत्वा गायन्त इव कानने ।
भ्रमरा विचरन्त्येते पुष्पपानकलस्वनाः ।

[ (l. 1) $Ś_1$ $D_6$ कूजत्; $D_{4,5,7}$ कूजन्ते ( for कूजन्ते ). $\tilde{N}_2$ ( m. also as above ) $B_1$ जलकुक्कुमः; $D_{1,2,6}$ जलकुक्कुटः. —(l. 2) $D_{4,7}$ ज्ञात्वा ( for श्रुत्वा ). $\tilde{N}_2$ reads इव in marg. $D_{4,5,7}$ नानावनान्तेषु वै( $D_4$ च ) ( for the post. half ). —$D_{4,5,7}$ om. from l. 3 up to st. 10. —(l. 3) $M_4$ पुष्पाहारकल° ( for the post. half ). ]

—$^{cd}$) $Ś_1$ $\tilde{N}_2$ $V_1$ B $D_{1-3,6}$ $M_4$ पश्य मंदाकिनीतीरे कुसुमप्रकरैः प्रिये. —After 9, $Ś_1$ $\tilde{N}_2$ $V_1$ B $D_{1-3,6}$ $M_4$ ins. :

1194* रचितानीव सुश्रोणि शयनानि द्रुमे द्रुमे ।
शिलातलानि चेमानि विमलानि शुचिस्मिते ।
लतावितानैश्छन्नानि पश्य रम्याणि भामिनि ।

[ (l. 1) $Ś_1$ $D_6$ वितानानीव शुभ्राणि ( for the prior half ). $V_1$ om. शयनानि. $D_3$ om. ( hapl. ) second द्रुमे. —(l. 2) $Ś_1$ $D_6$ नीलानि; $B_4$ चैतानि ( for चेमानि ). $\tilde{N}_2$ विपुलानि; $V_1$ $D_{1-3}$ विशालानि ( for विमलानि ). —(l. 3) $\tilde{N}_2$ $B_2$ $D_1$ लतावतानच्( $D_1$ °नैश् ); $B_{1,3,4}$ लतावितानच्; $M_4$ लतावतानैश्. $Ś_1$ $D_6$ लतागुल्मवितानीव ( for the prior half ). $\tilde{N}_2$ $V_1$ B भाविनि ( for °मिनि ). ]

10 $D_{4,5,7}$ om. 10 ( cf. v.l. 9 ). —$^a$) $G_2$ $M_1$ बहुमूलफलं पश्य. —For 10, $Ś_1$ $\tilde{N}_2$ $V_1$ B $D_{1-3,6}$ $M_4$ subst. :

1195* मातंगयूथनिचिते नानाविहगनादिते ।
नानाद्रुमगणाकीर्णे शैलेऽस्मिन्रम्यकानने ।

[ (l. 1) $Ś_1$ -यूथविनिते; $V_1$ $D_{1,2}$ $M_4$ -यूथानुसृते; $D_3$ -यूथानुगते. $B_4$ -नाहृते ( sic ); $D_6$ -नादिते ( sic ) ( for -नादिते ). —(l. 2) $V_1$ $D_{1,2}$ -द्रुमसमाकीर्णे; $M_4$ -द्रुमलताकीर्णे. ]

—Thereafter all the above MSS. ( except $D_3$ ) cont.; while $D_{4,5,7}$ ins. after l. 2 of 1193* ( owing to omission ) :

1196* वैदेहि विचरिष्यामः सुखमत्र वने प्रिये ।
इह प्राप्स्यसि वैदेहि मया सह रतिं शुभाम् ।

[ (l. 1) $B_4$ विहरिष्यामः. $D_{4,5,7}$ प्रिये वने ( by transp. ). —(l. 2) $Ś_1$ $D_{1-3}$ परां रतिं( $Ś_1$ $D_6$ गतिं ); $V_1$ $D_1$ $M_4$ रतिं परां; $D_2$ रतिं प्रिये ( for रतिं शुभाम् ). ]

11 $^b$) $G_2$ $M_1$ सीतया सह ( by transp. ). —For 11, $Ś_1$ $\tilde{N}_2$ $V_1$ B $D_{1-7}$ $M_4$ subst. :

G. 2. 56. 19
B. 2. 56. 15
L. 2. 60. 10

तं तु पर्वतमासाद्य नानापक्षिगणायुतम् ।
अयं वासो भवेत्तावदत्र सौम्य रमेमहि ॥ १२

लक्ष्मणानय दारूणि दृढानि च वराणि च ।
कुरुष्वावसथं सौम्य वासे मेऽभिरतं मनः ॥ १३

तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान्द्रुमान् ।
आजहार ततश्चक्रे पर्णशालामरिंदमः ॥ १४

शुश्रूषमाणमेकाग्रमिदं वचनमब्रवीत् ।
ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् ॥ १५

---

1197* अवेक्षमाणा एवं ते रम्यां मन्दाकिनीं नदीम् ।
चित्रकूटं समाजग्मुर्नानाकुसुमितद्रुमम् ।

[ (l. 1) Ś1 B2 अवेक्षमाणा. V1 D1–6,7 M4 वर्तेनं वीक्ष्य( D6,8,7 दृश्य )मानास्ते ( for the prior half ). —(l. 2) M4 समारोहुर् ( for समाजग्मुर् ). B1 नानाकुसुमिते द्रुमे; D2 नानाकुसुमसंछिन्नं ( for the post. half ). ]

12 $^{b}$) G1 -पक्षिगणैर्युतं. —After 12$^{ab}$, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

1198* बहुमूलफलं रम्यं संपन्नसरसोदकम् ।
मनोज्ञोऽयं गिरिः सौम्य नानाद्रुमलतायुतः ।
बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे ।
मुनयश्च महात्मानो वसन्त्यस्मिन्शिलोच्चये ।

[ (l. 1) G1,2 M1 संपन्नसलो( G2 °सलौ )दकं. K( ed. ) संपन्नं सरसोदकं ( for the post. half ). —After l. 1, G1 ins. :

1198( A )* चित्रकूटे हि संपन्नव्याधो लक्ष्मणमब्रवीत् ।

—(l. 3) M1 ( before corr. ) बाहुमूलफलो. M2 मां ( for मे ). —(l. 4) G2 M3 महाभागा ( for °त्मानो ). ]

—$^{c}$) Dt1 तात ( for तावद् ). —$^{d}$) Dg1 Dt1 T2 G2 M1 वयमत्र ( for अत्र सौम्य ). Dg1 रमामहे; Dt1 वसेमहि. —For 12, Ś1 Ñ2 V1 B D1–7 M4 subst. :

1199* तस्य शैलस्य पादे तु विविक्ते सलिलावृते ।
आश्रमं चक्रतुर्वीरौ भ्रातरौ रामलक्ष्मणौ ।

[ (l. 1) D6,8,7 पार्श्वे ( for पादे ). V1 D1,4,8,7 M4 [ दे ]श; D2,3 च ( for तु ). V1 D1 M4 विविक्ते सलिलावृते; B1 विमले सलिलावृते; B2 D2 विविक्तसलिलावृते; D5 विविक्ते च शिलावृते; D6,7 विचित्रकुसुमावृते; D8 विविक्तसलिलावृते ( for the post. half ). —(l. 2) Ś1 D6 चाशु ( for वीरौ ). Ñ2 marg.; B2 विविधे; D1 om. ( hapl. ) ( for भ्रातरौ ). ]

—After 12, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

1200* इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः ।
अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन् ।
तान्महर्षिः प्रमुदितः पूजयामास धर्मवित् ।
आस्यतामिति चोवाच स्वागतं तं निवेद्य च ।
ततोऽब्रवीन्महाबाहुर्लक्ष्मणं लक्ष्मणाग्रजः । [5]
संनिवेद्य यथान्यायमात्मानमृषये प्रभुः ।

[ (l. 1) T1,3 G2 महामतिः ( for कृताञ्जलिः ). —(l. 2) Dm1 [ आ ]श्रमे ( for °मं ). —(l. 4) M2 शोवाच. Dm1 वै; T1 च; K( ed. ) तु ( for तं ). G2 निहाप्य ( for निवेद्य ). —After l. 4, Dm1 ins. :

1200( A )* रामः सौमित्रिमुक्त्वेदं वचनमब्रवीत् ।
ज्ञातं मया सुखेष्व स्वदागमनकारणम् ।
अत्र वासमुनीनां च सकाशे रोचय प्रभो ।
इति तेन समाज्ञप्तः प्रीयमाणो महारथः ।
तथेति प्रतिजग्राह ऋषिणोक्तं कृताञ्जलिः । [5]

—(l. 5) G1 महातेजा; M3 महाबाहुः. T2 लक्ष्मणाग्रजः. ]

13 D5 om. 13. —$^{b}$) G1 वराणि च दृढानि च ( by transp. ). —$^{c}$) G1 कुरुष्वावसथा( न् ). —$^{d}$) T2 वासाः G2 वासो. G1 वसेमामिरतं मनः. —For 13, Ś1 Ñ2 V1 B D1–4,6,7 M4 subst. :

1201* गजमग्नान्युपादाय दारूण्युपवनान्तरात् ।
लताविताननद्धे द्वे चक्रतुः सदने पृथक् ।

[ (l. 1) Ś1 B1,3 D2,6,7 [ उ ]पाहृत्य; B4 °हृत्य ( for °दाय ). V1 D1–4,7 M4 [ अ ]थ ( for [ उ ]प- ). —(l. 2) Ñ2 लतावनद्धे च तथा; V1 °नद्धे द्वे; B2 °बंधे तु; B3,4 D1,4 लतावितानबद्धे द्वे ( B2 च ); D2,3 °नद्धे द्वे; M4 लतावितानबद्धे द्वे ( for the prior half ). Ñ2 B2 चक्रतुः शयने; V1 D1–4 शरणे चक्रतुः; B1,4 M4 चक्रतुः शरणे. D7 बतानद्धे द्वे शरणे( णे ) चक्रतुस्तौ पृथक्. ( subm. ) ]

14 $^{a}$) T1,2 सौमित्रीन् ( sic ). —For 14, Ś1 Ñ2 V1 B D1–7 M4 subst. :

1202* वृक्षपर्णैश्च बहुभिश्छादयामासतुस्ततः ।
ते पर्णशाले कृत्वाथ तोषयामास लक्ष्मणः ।

[ (l. 1) V1 D1,2 तु( V1 च )बहुभिस्तौ; D2,4,6,7 M4 महद्भिश्च ( M4 °स्तौ ) ( for च बहुभिः ). B4 छादयामास लक्ष्मणः ( for the post. half ). —(l. 2) B1 तु; D5 च ( for [ अ ]थ ). ]

—Then all cont. :

1203* मृदोपलेपनं चक्रे वैदेही तनुमध्यमा ।

[ B4 मृदोपलेपनं; D5 मृदुपलेपनं. ]

—After 14, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins :

1204* तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम् ।

[ Dg1 निष्ठितां ( for निष्ठितां ). T2 G2 निष्ठितामबद्धकटां. @ Cm.t : बद्धकटां बद्धकवाटम् । छान्दसो वर्णलोपः । @ G1 सुदर्शना. ]

15 For 15, Ś1 Ñ2 V1 B D1–7 M4 subst. :

1205* कृत्वाश्रमपदं रामस्ततो लक्ष्मणमब्रवीत् ।
मृगमाहृत्य सौमित्रे चरुं श्रपय मा चिरम् ।
तेन वास्तुमिहेच्छामि यष्टुमाश्रमदेवताः ।

[ (l. 1) D6,8,7 कुलाश्रमपदे( D5 °दं ). —(l. 2) Ś1 D5 आहत्य; Ñ2 आहृत्य ( for आहृत्य ). D5 विधे ( meta. ) ( for

एवं स कृपणं तत्र पर्यदेवयतासकृत् ।
ततोऽस्मै कर्तुमुदकं प्रवृत्तः सह भार्यया ॥ ३९
स तु दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः ।
आश्वास्य च मुहूर्तं तु पितरौ वाक्यमब्रवीत् ॥ ४०
स्थानमस्मि महत्प्राप्तो भवतोः परिचारणात् ।
भवन्तावपि च क्षिप्रं मम मूलमुपैष्यतः ॥ ४१
एवमुक्त्वा तु दिव्येन विमानेन वपुष्मता ।
आरुरोह दिवं क्षिप्रं मुनिपुत्रो जितेन्द्रियः ॥ ४२
स कृत्वा तूदकं तूर्णं तापसः सह भार्यया ।
मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ ४३
अद्यैव जहि मां राजन्मरणे नास्ति मे व्यथा ।
यच्छरेणैकपुत्रं मां त्वमकार्षीरपुत्रकम् ॥ ४४

G. 2. 66. 53
B. 2. 64. 52
L. 2. 70. 52

---

बाहि ). —(l. 9) Ś1 V1 D4.6.7 वांत्वयां; Ñ2 वान्धवतां (sic); B1 D1-3 बाल°; D5 बांति परां; M4 °ह्युमां (for बान्धवतां).]

—Thereafter Ś1 Ñ2 V1 B D1-6.8(m.) M4 cont. :

1468* तस्मादितश्च्युतः स्थानात्प्राहि लोकानमुच्युतः ।

[M4 हतश्च गत्वा त्वं (for इतश्च्युतः स्थानात्). V1 मधुविषः; B1 D2 °श्रुतः; D1 M4 °कच्युतः (for °च्युतः). Ś1 D6 लोकानामुषि ह्याश्रतान् (for the post. half).]

—After 38, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins. :

1469* स तु यास्यति येन त्वं निहतो मम बान्धवः ।

[M3 moth-eaten for बान्धवः.]

39 [b]) G1 [आ]तुरः (for [अ]सकृत्). —For 39[ab], Ś1 Ñ2 V1 B D1-7 M4 subst. :

1470* एवमादि विलप्यार्तः स मुनिः सह भार्यया ।

[Ś1 D6 [अ]थ; M4 [अ]ति (for [आ]र्तः). D7 om. (hapl.) स मुनिः. D6 भार्यया सह (by transp.).]

—Thereafter Ś1 D4-7 cont. :

1471* संस्कारं लम्भयामास दुःखोपहतचेतनः ।

[D4.7 सत्कार. D5 -चेतसः (for °नः).]

—[c]) Ś1 Ñ2 B D4-7 ततोस्य; Dt1 तथोक्त्वा (for ततोऽस्मै). —[d]) Ś1 Ñ2 V1 B D1-7 M4 प्रययौ (Ś1 Ñ2 D6 °तस्थौ D4.5.7 °चके) दीनमानसः.

40 [a]) T2 ततो (for स तु). —After 40[ab], Dg1 Dt1 Dd1 Dm1 T G M1-3 ins. :

1472* स्वर्गमभ्यारुहत्क्षिप्रं शक्रेण सह धर्मवित् ।
आबभाषे च तौ वृद्धौ सह शक्रेण तापसः ।

[(l. 1) Dm1 अभ्याक्रह; Cm as above. —(l. 2) Dm1 अबभाषे; Cm as above. G1 reads तौ वृद्धौ twice. M1 reads वृद्धौ *inf. lin.* Dm1 transp. सह and शक्रेण. T2 तापसं.]

—[c]) Dg1 Dt1 Ct आश्वस्य; Cg as in text. G1 हि (for च). Dg1 Dd1 Dm1 T2 G M1-3 तौ (for तु). —[d]) Dt1 G2 पितरं. Dg1 M3 वाक्यं पितरमब्रवीत्. —For 40, Ś1 Ñ2 V1 B D1-7 M4 subst. :

1473* अथ दिव्यवपुर्भूत्वा विमानवरमास्थितः ।
मुनिपुत्रः स तौ वाक्यमुवाच पितराविदम् ।

[(l. 1) D2 धृत्वा (for भूत्वा). M4 मास्थिताः (for मास्थितः).
—(l. 2) Ś1 D5.6-7 M4 ततो (for स तौ). V1 पितरं इति (for °राविदम्).]

41 [d]) T2 G2 लोकम्; Cr.g.k.t as in text (for मूलम्). Dg1 उपैष्यथः; Dt1 अपेष्यथ; Dd1 T1.3 G1.3 M1.2 उपेष्यथः; Dm1 T2 M3 °थः; G2 समिष्यथ; Cm as in text (for उपैष्यतः). —For 41, Ś1 Ñ2 V1 B D1-7 M4 subst. :

1474* भवन्तौ परिवर्याहं प्राप्तः पुण्यां परां गतिम् ।
भवन्तावपि हि क्षिप्रं स्थानमिदमवाप्स्यतः ।

[(l. 1) D2 भवतोः. Ś1 D6 इमां (for परां). —(l. 2) V1 अति (for अपि). B4 om.; D1-3 M4 च (for हि). V1 क्षेत्रम् (for क्षिप्रं). V1 इहस्थानम्; D1-3 इह स्थानम् (by transp.). Ś1 B1.4 D1-7 मवाप्स्यथ (Ś1 B4 D2 °थः).];

and then cont. :

1475* न भवद्भ्यामहं शोच्यो नार्य राजापराध्यति ।
भवितव्यमनेनैवं येनाहं निधनं गतः ।

[(l. 1) Ś1 D6 नापि; D5 नाय्यं (for नार्य). M4 [अ]पराध्यते. —(l. 2) Ś1 D6 [ए]व (for [ए]वं). V1 मतेन तथा; D1.2.4.6.7 स्वमेतेन; D5 एव मंतव्यं (all hypm.) (for अनेनैवं). M4 भवितव्यैवमेतेन (hypm.) (for the prior half).]

42 [a]) Dd1 reads तु in marg. —[d]) G2 damaged from निपुत्रो up to स कृ in 43[a]. —For 42, Ś1 Ñ2 V1 B D1-3.6 M4 subst.; whereas D4.5.7 subst. l. 1 only :

1476* एतावदुक्त्वा वचनमृषिपुत्रो दिवं ययौ ।
दिवि दिव्यवपुर्भूत्वा विमानवरमास्थितः ।

[(l. 1) D4.7 एवमुक्त्वा तु (for एतावदुक्त्वा). Ñ2 B1 D1 मुनिपुत्रो. Ś1 D2.6 दिवं गतः; B3 D1 ययौ दिवं (by transp.). —(l. 2) B2 D2 M4 देवि. Ś1 D6 दिव्यांबरो (for दिव्यवपुर्). Ś1 B1.4 D6 राजन् (for भूत्वा).]

43 G2 damaged for स कृ (cf. v.l. 42). —[a]) Dt1 Dd1 G1 M1-3 [अ]थ; T2 [अ]तो; G3 च (for तु). Dm1 कृत्वामुदकं (sic). Ś1 Ñ2 V1 B D1-7 M4 सोपि कृत्वोदकं तस्य. —[b]) Ś1 Ñ2 V1 B D1-7 M4 पुत्रस्य (for तापसः). —[c]) Ś1 Ñ2 V1 B D1-7 M4 तपस्वी मामुवाचेदं. —[d]) D5 कृतांजलिर्. M4 अवस्थितं.

44 [a]) G1 मे (for मां). —[c]) Dg1 Dt1 Dd1 Dm1 T2 G M1-3 यः; Cg as in text (for यच्). G2 [ए]क पुत्रं.

G. 2. 66. 44
B. 2. 64. 51
L. 2. 70. 53

त्वया तु यदविज्ञानान्निहतो मे सुतः शुचिः ।
तेन त्वामभिशप्स्यामि सुदुःखमतिदारुणम् ॥ ४५
पुत्रव्यसनजं दुःखं यदेतन्मम सांप्रतम् ।
एवं त्वं पुत्रशोकेन राजन्कालं करिष्यसि ॥ ४६
तस्मान्मामागतं भद्रे तस्योदारस्य तद्वचः ।
यदहं पुत्रशोकेन संत्यक्ष्याम्यद्य जीवितम् ॥ ४७

—For 44, Ś1 Ñ2 V1 B D1–7 M4 subst.; G1 M3 cont. l. 3 only after 1478* :

1477* कथं त्वं ख्यातयशसां राजर्षीणां महात्मनाम् ।
अविनीतः कुले जात इक्ष्वाकूणां नराधम ।
स्त्रीनिमित्तं न वैरं ते क्षेत्रजं न मया सह ।
अर्थैकनैपुणा कल्याणसमार्योऽहं हतस्त्वया ।

[ (l. 1) D2 ऋषीणां च ( for राजर्षीणां ). —(l. 2) B1 D1.2 अविनीत-. Ś1 V1 D1–4.6.7 नृपाधम( V1 °मः ); D5 नराधमः; M4 कुलाधम. —(l. 3) Ś1 V1 D1–7 M4 न स्त्रीनिमित्तं ( by transp. ). D5 हि; D4.7 वै ( for ते ). G1 M3 ते वैरं ( by transp. ). V1 D1–6.7 M4 मया न क्षेत्रजं सह( D7 सर ); G1 M3 क्षेत्रजं वस्तुवे न ते ( for the post. half ). —(l. 4) Ñ2 B3 तद्वेकैपुणा( sic ); V1 तथैकेने°; B1 सदैके°; B2 चरावैके°; B4 तदा वैके°; D1 अथैकेने°; M4 तथार्थेके°; G( ed. ) तथैके° ( for अर्थैकने° ). D4.6.7 M4 त्वया हतः ( by transp. ).]

—After 44, G1 M3 ins. :

1478* कथं नेषां कुले जातः क्षत्रियाणां महात्मनाम् ।
सर्ववेदविदर्थज्ञो धर्मे न कुरुते( G1 °ते ) मनः ।

—Thereafter G1 M3 cont. l. 3 of 1477*. Then M3 repeats 44[cd] :

45 [a]) Dt1 Dd1 Dm1 त्वयापि च यदज्ञानात् . —[b]) Dt1 Dd1 Dm1 स बालकः ( for सुतः शुचिः ). —[c]) Dt1 Dd1 Dm1 T1.2 अपि शप्स्येऽहं( T1.2 अभिशप्स्यामि ). —[d]) Dg1 स्वदुःखम् : Cg सु°( as in text ). G2 दुति ( sic ); G3 अपि ( for अति- ). G3 damaged for दारुणं. —For 45, Ś1 Ñ2 V1 B D1–7 M4 subst. :

1479* अविज्ञानात्तु मे पुत्रो हतो यदनयेन च ।
त्वया तस्मादहमपि शप्स्यामि त्वां निबोध मे ।

[ (l. 1) D2 च मे; D4.7 त्वया ( for तु मे ). Ś1 D6 हतो ह्यविनयेन वा; V1 यद्धतोऽविनयेन च; B3 ( m. also )यद्धतोऽविनयेन च; D1–6.7 M4 यद्धतोऽविनयेन च ( for the post. half ). —(l. 2) Ś1 D4.6.7 तथा ( for त्वया ). B D5 शपामि; D2.3 शप्स्यामि ( corrupt ) ( for शप्स्यामि ). Ñ2 B3 नराधम ( for निबोध मे ).]

46 G3 mostly damaged for [a]. —[b]) T2 G1 मत ( sic ) ( for मम ). —[c]) Dg1 reads त्वं *sup. lin.* —[d]) T2.3 G1.2 M1 Cr गमिष्यसि( T2 °सि ); Cm करिष्यसि; Cg.t °सि ( as in text ). —For 46, Ś1 Ñ2 V1 B D1–7 M4 subst. :

1480* पुत्रशोकातुरः प्राणान्संत्यक्ष्याम्यवशो यथा ।
त्वमप्यन्ते तथा प्राणांस्त्यक्ष्यसे पुत्रलालसः ।

[ (l. 1) Ś1 पुत्रशोकार्तं; M4 °शोकार्तः. D2 om. ( hapl. ) from the post. half of l. 1 up to the prior half of l. 2. V1 D1 त्यक्ष्यामि विवशो यथा; D4.6.7 M4 त्यक्ष्याम्यवश( M4 °स )शो यथा( D7 मया ) ( for the post. half ). —(l. 2) V1 त्यक्ष्यसि. ];

and then cont. :

1481* एवं शापमहं लब्ध्वा स्वपुरं पुनरागतः ।
सोऽप्यूषिः पुत्रशोकेन नचिरादिव संस्थितः ।

[ (l. 1) B2 ( *sup. lin.* also as above ) पापम् ( for शापम् ). D5 om.; D4 स्वपुरे ( for स्वपुर ). —(l. 2) Ś1 D4.6 M4 स ऋषिः; D5 सोऽपिः; D4 सोऽर्षिः; D7 सोऽप्यर्षिः ( sic ) ( for सोऽप्यृषिः ). D2 om. ( hapl. ) न in नचिरात् . D2 च संस्थितः; D3.4.7 दिवमास्थितः. D5 प्राणांस्त्यक्त्वा दिवं गतः ( for the post. half ).]

—After 46, Dg1 Dt1 Dd1 Dm1 T G M1–3 ins. :

1482* अज्ञानात्तु हतो यस्मात्क्षत्रियेण त्वया मुनिः ।
तस्मात्त्वां नाविशत्याशु ब्रह्महत्या नराधिप ।
त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यति ।
जीवितान्तकरो घोरो दातारमिव दक्षिणा ।
एवं शापं मयि न्यस्य विलप्य करुणं बहु । [5]
चितामारोप्य देहं तन्मिथुनं स्वर्गमभ्ययात् ।
तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयम् ।
तदा बाल्यात्कृतं देवि शब्दवेध्यनुकर्षिणा ।
तस्यायं कर्मणो देवि विपाकः समुपस्थितः ।
अपथ्यैः सह संभुक्ते व्याधिरन्नरसे यथा । [10]

[ (l. 2) Dt1 त्वा. Dm1 M3 नाविशत्याशु; T2 नावशत्याशु ( corrupt ); G2 M3 न विशत्वा( M3 °त्या )शु; Cm as above. M3 नृपाधिप ( for नरा° ). —(l. 3) M1 एवं ( for एव ). G2.3 [आ]गमिष्यति. —(l. 4) M3 जीवितान्तकरो घोरो ( for the prior half ). Dt1 Dd1 Ct दक्षिणां. —(l. 5) G3 damaged up to विल. —(l. 6) T2 चितामारोप्य. —(l. 7) Dg1 एव; Cg as above ( for एतत् ). —T2 om. from l. 8 up to l. 1 of 1485*. —(l. 8) M3 बाल्यात् ( for बाल्यात् ). G2.3 M3 -वेध्या( G2 °ध्य )नुकर्षि( M3 °र्षे )णा; Cm -वेध्यानुकर्षिणा. —(l. 9) T2 विपाकः ( for °कः ). —(l. 10) Dt1 Dd1 Cm संभुक्ते; G3 संभुक्तं; M3 संभुक्तो. K( ed. ) Ct*p* व्याधिम् ( for व्याधिर् ). M3 Ct*p* अन्नरसे. G3 अन्नर x x x ( damaged ).]

47 T2 om. 47 ( cf. v.l. 1482* ). —[a]) G3 mostly damaged. Dg1 तस्मात् . G2 M1 मागतं ( for मागतं ). —After 47[ab], Dt1 Dd1 Dm1 T1.2 G M1.2 ins.; Dg1 cont. after 1486*; while K( ed. ) cont. after l. 1 of 1485* :

1483* इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह च भूमिपः ।

यदि मां संस्पृशेद्रामः सकृदद्यालभेत वा ।
न तन्मे सदृशं देवि यन्मया राघवे कृतम् ॥ ४८
चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते ।
दूता वैवस्वतस्यैते कौसल्ये त्वरयन्ति माम् ॥ ४९
अतस्तु किं दुःखतरं यदहं जीवितक्षये ।
न हि पश्यामि धर्मज्ञं रामं सत्यपराक्रमम् ॥ ५०

G. 2. 66. 61
B. 2. 64. 67
L. 2. 70. 66

[ Dt1 सु ( for न ). T1.2 नृपतिः. ]

—Dg1 repeats $47^{cd}$ m. sec. m. after 48. —c) Dd1 यदंचः T1.2 तदहं ( for यदहं ). —d) Dg1 ( both times ) Dt1 Dd1 Dm1 संत्यजिष्यामि. —For 47, Ś1 Ñ2 V1 B D1–7 M4 subst. :

1484* स ब्रह्मशापो नियतमद्य मां समुपस्थितः ।
तथा हि पुत्रशोकार्तं प्राणाः संत्वरयन्ति माम् ।

[ ( l. 1 ) D1 M4 अंधेन; D2 अंधेन; D3 अंधव; D5 ममायं ( for अद्य मां ). D1.2.5.7 M4 समुपागतः. V1 स ब्रह्मशापनिति न मन्येयं समुपागतः. —( l. 2 ) V1 D1–7 M4 यथा ( for तथा ). Ñ2 पुत्रशोकार्तं; D4.5.7 °शोकेन. B2 D3 मामां ( sic ). D6 मे ( for माम् ). ]

—After 47, Dg1 Dt1 Dd1 Dm1 T G M1.2 ins.; M3 cont. after 1488*; whereas K( ed. ) ins. l. 1 after 47 and l. 2 after $48^{ab}$ :

1485* चक्षुर्भ्यां त्वां न पश्यामि कौसल्ये त्वं हि मां स्पृश ।
यमक्षयमनुप्राप्ता द्रक्ष्यन्ति न हि मानवाः ।

[ T3 om. l. 1 ( cf. v.l. 1482* ). —( l. 1 ) M3 चक्षुषा ( for °र्भ्यां ). Cg मा ( for मां ). Dg1 T3 G1 साधु मां( K[ ed. ] मा ); Dm1 M3 त्वं हि मा; G2 मामभि–; M3 न हि मा ( for त्वं हि मां ). T1 स्पृ॰. —After l. 1, K( ed. ) ins. 1483*. —( l. 2 ) T3 तमक्षयम्. M3 अनुप्राप्तं. Dg1 T1.2 G1 प्रेक्षं( Dg1 °क्ष्यं )ते; Cg as above ( for द्रक्ष्यन्ति ). M3 अनुप्राप्तान्द्रक्ष्यंति. ]

On the other hand, M3 ins. 1488* after 47.

**48** T3 G3 om. $48^{ab}$. K( ed. ) transp. $48^{ab}$ and $48^{cd}$ ( along with their resp. star passages ). —b) Dt1 Ct अन्वारभेत; Dd1 Dm1 अन्वालभेत; T1 अथवार°; T2 अथ लभेत; G2 M1.2.4 अप्या( M4 °प्य )लपे( M2 °भे )त ( for अद्यालभेत ). G1 च ( for वा ). Dg1 अन्वालभेत्तथा. —After $48^{ab}$, Dg1 ( followed by 1483* ) Dt1 Dd1 Dm1 T1.2 G1.2 M1.2 ins. :

1486* धनं वा यौवराज्यं वा जीवेयमिति मे मतिः ।

[ G2 M1 वनं ( for धनं ). Dg1 जीवेयम्; G1 जिवेयम् ( for जीवे° ). ];

while K ( ed. ) ins. l. 2 of 1485* after $48^{ab}$.

—c) K( ed. ) एतन्मेऽसदृशं. —G2 damaged after राघ in $48^{d}$ up to तनु न in l. 1 of 1488*. —For 48, Ś1 Ñ2 V1 B D1–7 M4 ( l. 2–4 only for $48^{cd}$ ) subst. and read after 49 :

1487* यदि मां संस्पृशेद्रामः संभाषेतापि चागतः ।
जीवेयमिति मे बुद्धिः प्राप्यामृतमिवातुरः ।
दृष्ट्वापि यथाहं प्राणांस्त्यजेयं दयितं सुतम् ।
प्रेत्यापि न विरज्येऽहं पुत्रशोकेन दुःखितः ।

[ ( l. 1 ) V1 संस्पृशेद् ( for °स्पृशेद् ). D1–5.7 संभाषेद् ( for °षेत ). Ñ2 B1.2 चागतः; V1 D1–5 वा पुनः ( for चागतः ). D4.7 चाप्यथागतः. —( l. 2 ) B2 अपि ( for इति ). D1.2 M4 प्राश्य ( for प्राप्य ). —D4.5.7 om. l. 3–4. —( l. 3 ) Ś1 D2.6 दृष्ट्वा हि. B4 यथाहं; D1–5 यदा ( for यथा ). —( l. 4 ) Ś1 D6 च न दह्येत; D1.2 M4 न नि( M4 हि )दह्येयं; G( ed. ) न विमुञ्चेयं. V1 प्रेत्यापि परिदह्येयं पुत्रशोके सुदुःखितः. ]

—After 48, Dt1 Dd1 Dm1 T G M1.2 K ( ed. ) ins.; Dg1 ins. after the repetition of $47^{cd}$ ( cf. v.l. 47 ); while M3 ins. after 47 :

1488* सदृशं ननु तस्यैव यदनेन कृतं मयि ।
दुर्वृत्तमपि कः पुत्रं त्यजेद्भुवि विचक्षणः ।
कश्च प्रव्राज्यमानो वा नासूयेत्पितरं सुतः ।

[ ( l. 1 ) G2 damaged up to तनु न. —( l. 2 ) T1 दुर्वृत्तम्. —( l. 3 ) G2 कश्चित् ( for कश्च ). M3 पितरः ( sic ). ]

—Thereafter M3 cont. 1485*.

**49** a) M3 चक्षुर्भ्यां. T3 om. न पश्यामि. Ś1 Ñ2 B D4–7 चक्षुर्भ्यां( Ś1 D6 °षा )न प्र( B2 हि; D5 च )पश्यामि; V1 D1–3 नाक्षिभ्यां देवि पश्यामि. —b) D3 स्मृतिर् ( sic ). Ś1 D6 मे( D6 न ) प्रविलुप्यते; Ñ2 B M4 मे देवि लुप्यते; V1 D1–2.7 मे विप्रलुप्यते. —c) B1 [ दू ]ति ( sic ) ( for [ दू ]ते ). Ś1 D6 स्मृत्वा तौ द्वौ गतौ प्राणान्. —d) Ś1 Ñ2 V1 B D1–7 त्वरयंति च मां शुभे. —After 49, Ś1 Ñ2 V1 B D1–7 M4 read 1487*.

**50** a) Dd1 Dm1 ततस्तु; D4.7 अतो नु ( for अतस्तु ). G2 कं ( for किं ). D5 इतो न किंचिद्दुःखतरं ( hypm. ). —c) D4.5.7 नेह ( for न हि ). G2 पश्याम. Dm1 D5 धर्मज्ञ ( sic ). —For 50, Ś1 Ñ2 V1 B D1–3.6 M4 subst. :

1489* अतो नु किं दुःखतरं किं वा कृच्छ्रतरं भवेत् ।
यददृष्ट्वैव रामस्य मुखं त्यक्ष्यामि जीवितम् ।

[ ( l. 1 ) V1 D1–2 M4 अतस्तु( D2 °स्तु [ sic ] ). D2 कष्टतर ( for कृच्छ्र° ). Ś1 B2 D6 transp. दुःखतरं and कृच्छ्रतरं. Ñ2 B2.4 भवेन्मम तु मानिनि ( G[ ed. ] न मानिनि ); B3 भवेद्देवि पतिव्रते ( for the post. half ). —( l. 2 ) Ś1 D6 यदद्रष्ट्वा च; B4 यदि दृष्ट्वैव. Ś1 Ñ2 V1 B4 D2 मुखं ( for मुखं ). ]

—All the above MSS. then read 1495* followed by st. 54.

—After 50, Dg1 Dt1 Dd1 Dm1 T G M1–2 ins. :

1490* तस्मादसंगतः शोकः सुतस्याप्रतिकर्मणः ।
उच्छोषयति मे प्राणान्वारि स्तोकमिवातपः ।

G. 2. 66. 64
B. 2. 64. 68
L. 2. 70. 63

न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम् ।
मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः ॥ ५१
पद्मपत्रेक्षणं सुभ्रु सुदंष्ट्रं चारुनासिकम् ।
धन्या द्रक्ष्यन्ति रामस्य ताराधिपनिभं मुखम् ॥ ५२
सदृशं शारदस्येन्दोः फुल्लस्य कमलस्य च ।
सुगन्धि मम नाथस्य धन्या द्रक्ष्यन्ति तन्मुखम् ॥ ५३
निवृत्तवनवासं तमयोध्यां पुनरागतम् ।
द्रक्ष्यन्ति सुखिनो रामं शुक्रं मार्गगतं यथा ॥ ५४
अयमात्मभवः शोको मामनाथमचेतनम् ।
संसादयति वेगेन यथा कूलं नदीरयः ॥ ५५
हा राघव महाबाहो हा ममायासनाशन ।
राजा दशरथः शोचञ्जीवितान्तमुपागमत् ॥ ५६

[ (l. 1) B(ed.) दर्शनजः (for [ अ ]द°). —(l. 2) Dg1 Dt1 Dd1 Dm1 M3 वै (for मे).];

whereas after 50, D4.6.7 read 54 (followed by 1495*).

**51** a) Ś1 D6 ते देवा न मनुष्यास्ते; D4 न ते देवा मनुष्यास्ते (by transp.). —b) D4.7 -मंडलं (for -कुण्डलम्). Ś1 Ñ2 V1 B1-3 D1-3.6 M4 ये तत्तु (M4 हि पू )र्णेंदुसंनिभं (V1 D1-3 M4 °वर्चसं); B4 ये पूर्णेदुसमन्वितं (sic). —D6 om. (hapl.) 51d–52c. —d) M3 *म: (moth-eaten). Ś1 Ñ2 V1 B D1-3.6 M4 पुरीं प्रविशतो वनात्; D4.7 वनात्प्रत्यागतस्य वै.

**52** D6 om. 52abc (cf. v.l. 51). —ab) Ś1 Ñ2 V1 B D1-4.6.7 M4 सुदंष्ट्रं विमलं (Ś1 D6 निर्मलं) कांतं चारुपद्मदलेक्षणं. —After 52ab, B2 ins.:

1491* सर्वैर्गुणगणैर्युक्तं सर्वलोकहिते रतम् ।

—d) Ś1 Ñ2 B D6 तारापति- (for °धिप-). V1 Dt1 Dd1 Dm1 -समं (for -निभं). D3 शुभं (for मुखम्).

**53** a) Ś1 D4-7 शारचंद्रस्य सदृशं. —b) Ś1 D6 कुंदस्य (for फुल्लस्य). —c) Ś1 D4-7 पुत्रस्य; Dg1 नाथ्यस्य; Dt1 Dd1 Dm1 रामस्य; T1 **स्य (for नाथस्य). T2 सुगंधिमनुनाथस्य. —d) Ś1 D6 वै; Dt1 Ct वे; D4.7 ते (for तन्). —For 53, Ñ2 V1 B D1-3 M4 subst.:

1492* शारदपद्मस्य फुल्लस्य तुल्यनिःश्वाससमाकुलम् ।
द्रक्ष्यन्ति सुखिनस्तस्य मुखं पुत्रस्य मे नराः ।

[ (l. 1) B4 कमलस्य (for फुल्लस्य). V1 शारदे** कुल्यस्य (sic) (for the prior half). Ñ2 V1 B1-3 D1.3 M4 -निश्वास-. —(l. 2) M4 पश्यंति and सुखपर्ण तु (for द्रक्ष्यन्ति and मुखं पुत्रस्य respy.). B1 M4 ये (for मे).]

—All the above MSS. cont.; while Ś1 D4-7 ins. after 53:

1493* इति रामं स्मरन्नेव शयनीयतले नृपः ।
अनेकयुगमासस्ते शशीव रजनीक्षये ।

[ (l. 1) D3 पर्व (for एव). V1 D1-3 शयनीय (V1 °नीयं; D3 °नीये )गतो. D6 नृपं (sic). —(l. 2) D4.6.7 अथ (for अन-). Ś1 B1 [ अ ]शु (for [ अ ]स्ते). V1 शमने स्वयमप्रयातास्तं (hypm.) (for the prior half). M4 दिवसक्षये.]

**54** Ś1 Ñ2 V1 B D1-3.6 M4 read 54 after 1495*. D4.6.7 read 54 after 50. —a) Ś1 Ñ2 V1 B D1-3.6 M4 निस्तीर्ण-; T2 निर्वृत्त- (for निवृत्त-) D3 त्वम् (sic); D2 माम् (sic) (for तम्). —D6 reads 54cd in marg. —c) V1 द्रक्ष्यामि. V1 सुखितो; B4 दुःखिनो (for सुखिनो). —d) Ś1 Ñ2 V1 B D1-3.5.6 M4 शक्रं स्वर्गादि(B2 स्वर्गाच्छक्रमि- [by transp.])वागतं. —After 54, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins.:

1494* कौसल्ये चित्तमोहेन हृदयं सीदतीव मे ।
वेदये न च संयुक्तान्शब्दस्पर्शरसानहम् ।
चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि मे ।
क्षीणस्नेहस्य दीपस्य संसक्ता रश्मयो यथा ।

[ (l. 1) Dt1 सीदतीतरां; T2 सीदती मनो (sic); M3 सीदतीह मे. —(l. 2) T2 देवये (meta.); G3 वेन्ये (for वेदये). T3 -सुखानहं (for -रसा°). —(l. 3) Dt1 विपद्यंते (for °द्यन्ते). Dt1 Dd1 Dm1 हि; T3 च (for मे). —(l. 4) Dg1 संशक्ता; Dt1 Dd1 Dm1 Ct संरक्ता; G1 M3 संयुक्ता; Cg as above; Ck संयुक्ताः (for °सक्ता).]

**55** b) Dg1 T G M1-3 अचेतसं (for °तनम्). —c) Dg1 संशीदयति; Dt1 Dd1 Dm1 Ct संसाधयति; T2 संसारयति; G1 संवादयति. —d) G1 M3 नदी- (for यथा). G3 यथा (for नदी-). M3 moth-eaten for -रयः. —For 55, Ś1 Ñ2 V1 B D1-7 M4 subst. and read (except D4.6.7 which read after st. 54) after 1489*:

1495* रामादर्शनजः शोकः प्राणान्रुजतीव मे ।
नदीतीररुहान्वृक्षान्वारिवेगो महानिव ।

[ (l. 1) Ś1 D6 भिनत्तीव; V1 D3 आकर्ष( D3 °र्षत )तीव; B1 आवहतीव; B4 नाशयन्; D6 M4 तु( M4 स ) रुजतीव. —(l. 2) D6 -रुहान्; M4 -रुहो (for -रुहान्). D3 महानिभ. D4.7 वायुवेगहतानिव (for the post. half).]

—Thereafter Ś1 Ñ2 V1 B D1-3.6 M4 read st. 54.

**56** a) M3 moth-eaten for हा. —After 56ab, Dg1 Dt1 Dd1 Dm1 T G M1-3 ins.:

1496* हा पितृप्रिय मे नाथ हा ममासि गतः सुत ।
हा कौसल्ये विनश्यामि हा सुमित्रे तपस्विनि ।
हा नृशंसे ममामित्रे कैकेयि कुलपांसनि ।
इति मातुश्च रामस्य सुमित्रायाश्च संनिधौ ।

तथा तु दीनं कथयन्नराधिपः
प्रियस्य पुत्रस्य विवासनातुरः ।
गतेऽर्धरात्रे भृशदुःखपीडित-
स्तदा जहौ प्राणमुदारदर्शनः ॥ ५७

G. 2. 66. 69
B. 2. 64. 78
L. 2. 70. 68

इति श्रीरामायणे अयोध्याकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

[ (l. 1) M3 पुत्र (for पितृ-). K(ed.) [अ]थ क (for मम). Dg1 Dd1 Dm1 T2 सुतः; Dt1 om. (hapl.?) सुत. —(l. 2) Dt1 Dd1 Dm1 न वक्ष्यामि; T2 न क्षिप्यामि; M3 विनक्षिप्यामि (hypm.) (for विनश्यामि). T2 लौमित्रे. —(l. 3) G1 M3 कैकेयी (sic). Dg1 T G M1.2 कुरुयासि(Dg1 °स)मि. —(l. 4) T1 M2 रामस्य मातुश्च (by transp.); T2 रामश्च (sic) मातुश्च.]

—[d] ) Dg1 G M1.2 वयनांतम् (for जीवितान्तम्). —For 56, Ś1 Ñ2 V1 B D1–7 M4 subst. :

1497* हा पुत्र हा राम इति ब्रुवन्नेव शनैर्नृपः ।
तत्याज सुप्रियान्प्राणानायुषोऽन्ते सुदुस्त्यजान् ।

[ (l. 1) Ś1 D2.4–7 हा राम हा पुत्र (by transp.). B1.4 M4 हा पुत्र राम इति च (for the prior half). B4 एवं (for एव). D2 ब्रुवंते शयनेनृपः; D5 शनैरेवं ब्रुवन्नृपः (for the post. half). —(l. 2) Ñ2 B1.3 D4 स्व(D4 सु)प्रियान् (for सुप्रि°). D4 पुत्रान् (for प्राणान्). Ñ2 B1(sup. lin. as above).3.4 पुत्रशोकेन दुःखितः (for the post. half). ]

57 [a] ) K(ed.) यदा (for तथा). Ś1 Ñ2 B D4–7 स: Dm1 (before corr.) तु (for तु). Ñ2 B1.2.4 Dt1 Dm1 (before corr. as in text) D5 T1.2 G3 M2.3 दीनः. V1 D1–3 M4 इति प्रसुप्तः(D3 °सुप्तः; M4 °सुप्तं) कथ°. —[b] ) Ñ2 B2 प्रियां स्व(B3 सु)पुत्रस्य (for प्रियस्य पु°). Ś1 Ñ2 B D5.6 विवास(B4 om. विवास)संकथां; V1 D1–3 M4 विवासकारणं; D4.7 °ससत्कथां. —[c] ) Ś1 Ñ2 V1 B D1–7 M4 शय(D3 यश [meta.])नीयसंश्रितो. —[d] ) Ś1 Ñ2 V1 B D1–7 M4 जहौ प्रियं जीवितमात्मनस्तदा(B1 °था).

Colophon. —Before Sarga name, Ś1 ins. ॐ twice. —*Sarga name* : Ś1 ब्रह्मशापः; Ñ2 B D6 ब्रह्मशापाख्यानं (B2 °शापाख्यापनं); V1 D1.3.5 दशरथप्राणत्यागः; D2.4.7 दशरथमरणं(D2 °थविपत्तिः). —*Sarga no.* (figures, words or both) : B1 D2.6.7 om.; Ś1 70; Ñ2 V1 B2 M4 66; B3 Dg1 Dt1 Dd1 Dm1 T G M1–3 64; B4 62; D1 122; D3.5 69; D4 65. —After colophon, D6 concludes with रामाय नमः; T2 श्रीरामचन्द्राय नमः; G श्रीरामाय नमः.

## ५९

G. 2. 67. 3
B. 2. 65. 1
L. 2. 71. 3

अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि ।
बन्दिनः पर्युपातिष्ठंस्तत्पार्थिवनिवेशनम् ॥ १
ततः शुचिसमाचाराः पर्युपस्थानकोविदाः ।
स्त्रीवर्षवरभूयिष्ठा उपतस्थुर्यथापुरम् ॥ २
हरिचन्दनसंपृक्तमुदकं काञ्चनैर्घटैः ।
आनिन्युः स्नानशिक्षाज्ञा यथाकालं यथाविधि ॥ ३

## 59

☞ Ñ1 missing for Sarga 59 (cf. v.l. 1058*). Dm1 begins with ॐ; M1.2 श्रीरामाय नमः. —Before 1, Ś1 Ñ2 V1 B D1–7 M4 ins.:

1498* विलप्याथ तमेवं तु तूष्णीं भूतं नराधिपम् ।
सुप्त इत्यवगम्यार्ता कौसल्या न व्यबोधयत् ।
अनुकत्वैव च भर्तारं किंचिच्छोकश्रमालसा ।
सुष्वाप शयने भूयः पुत्रशोकार्तमानसा ।

[(l. 1) Ś1 D6 अथैवं (for एवं तु). V1 M4 तमेव विलपितायां (M4 °स्वा तु); D1 तमेव प्रविलप्यार्ता; D2–5.7 तमेवं विलपंत तु (D2 °पत्यार्ता) (for the prior half). V1 B1 D1–5.7 तूष्णीमूत (sic). —(l. 2) D2–5.7 M4 सुप्तम्. V1 [इ]व सत्वार्ता; D6 [अ]-वगम्यंती (for [अ]वगम्यार्ता). V1 D2 वि(D2 न [sic])बोधयेत्; B2 व्यवर्धयत् (sic); D7 प्रबोधयत् (for व्यबोधयत्). —(l. 3) Ś1 D6 अनुक्तातं (sic); Ñ2 अनुक्तैव च; V1 अनुक्ते चैव; D2 न तुक्त्वैव च. V1 D1–2 राजानं (for भर्तारं). Ś1 D6 -श्रमाकुला; Ñ2 B D1 -समाकुला; D2 -समानसा (for -श्रमालसा). —(l. 4) D2 repeats erroneously the prior half of l. 2 in place of the prior half of l. 4.]

1 ᵃ) Ś1 रात्रौ. D6 अर्धरात्रौ (sic). Dg1 वितीतायां (sic). —ᵇ) Ś1 Ñ2 V1 B D1–7 M4 संध्याकाल(D2.6 °ले) उप(D6 व्यव)स्थिते. —D2 om. 1ʳᵈ. —ᶜ) Some MSS. बंदिनः which is ignored here and below. Ñ2 erroneously repeats पातिष्ठन्. —ᵈ) Ś1 Ñ2 V1 B D1.2–7 M4 पार्थिवं (Ñ2 B2.4 D1.4.5.7 °व) प्रतिबोधकाः. —After 1, Ś1 Ñ2 V1 B D1.2.6 M4 ins.:

1499* तेषां तु समुपश्रुत्य सूतमागधबन्दिनाम् ।
सर्वा बुबुधिरे सुप्ता नृपान्तःपुरयोषितः ।

[(l. 1) Ś1 तत्समुपश्रुत्य; V1 D1.2 M4 स्वनमु°; D6 तु तद्° (for तु समु°). M4 तेषां स्वागतं° (for the post. half). —(l. 2) Ñ2 B (B2 before corr. as above) तूर्णं; D2 सर्वां; M4 तत्र (for सुप्ता). M4 राजांतःपुर-.];

while Dg1 Dt1 Dd1 Dm1 D4.5.7 T G M1–3 ins.:

1500* सूताः परमसंस्कारा मागधाश्चोत्तमश्रुताः ।
गायकाः स्तुतिशीलाश्च निगदन्तः पृथक्पृथक् ।
राजानं स्तुवतां तेषामुदात्ताभिहिताशिषाम् ।
प्रासादाभोगविस्तीर्णः स्तुतिशब्दो ह्यवर्तत ।
ततस्तु स्तुवतां तेषां सूतानां पाणिवादकाः ।　　[5]
अपदानान्युदाहृत्य पाणिवादानवादयन् ।
तेन शब्देन विहगाः प्रतिबुद्धा विसस्वनुः ।
शाखास्थाः पञ्जरस्थाश्च ये राजकुलगोचराः ।
व्याहृताः पुण्यशब्दाश्च वीणानां चापि निःस्वनाः ।
आशीर्गेयं च गाथानां पूरयामास वेश्म तत् ।　　[10]

[(l. 1) T1 परमसत्कारा. Dg1 Dt1 T1.2 G3 M2 Cv.m.g.k.t.p मंगलाः; Ct as above (for मागधाः). D4.5.7 बहुश्रुताः; T1 [च]समाश्रिताः (for [च]त्तमश्रुताः). —(l. 2) D4.5.7 T1 G2 M1.2 गायनाः; G3 गायिनः; Ck.t °काः (as above). Dt1 D4.5 Ck.t स्तुति-; Cr as above (for स्तुति-). Dd1 Dm1 निनदंतः. —(l. 3) Dm1 तत्र (for तेषाम्). Dd1 Dm1 उत्तम-; G1 उचित- (for उदात्त-). T2 -[अ]भिहताशिषां. Dt1 उदात्ताभि ० ० हि ०; D4.5.7 सूतमागधवंदिनां (for the post. half). —(l. 4) T G1.2 M1.2 व्य(T2 ह्य)वर्तत; G3 M3 [ऽ]भ्यवर्तत; Cm as above (for ह्यवर्तत). D4.5.7 प्रासादभागे विस्तीर्णे गीतशब्दोऽभ्यवर्तत. —(l. 5) D4.5.7 तेषां सुमनसां तत्र (for the prior half). D4 सुवर्णाभिहिताशिषा (sic); D5 सुवर्णाभिहिताशिषः; D7 सुवर्णैः शुभाशिषो (for the post. half). —(l. 6) G3 [उ]दाहृत्य (for [उ]दा°). Dm1 (before corr. as above) T1 M2 पाणिवादानि; G2.3 M1.2 Cv.g.k पाणिवादान्; Ct °दानि (as above). D4.5.7 अवसाने स्व(D5 °घु; D7 °ध)पाहूते न निवेश(D5 निवेश त)मवेक्ष्य च. —(l. 7) Dd1 प्रति- (for तेन). D4 ते सर्वे (for विहगाः). G1 प्रतिबुध्य. Ck.t स्वनुः. Dt1 Dd1 Dm1 च स्वनाः(Dt1 °नुः); T2.3 G3 M2.3 विसस्वनुः. D4.5.7 विप्रबुद्धा वि(D5 व)बुबुधुः (for the post. half). —G2 reads l. 8 (var.) twice —(l. 8) G3 (second time व्याहृताः) M1 शालिकाः (for शाखास्थाः). Cr राजगृह- (for °कुल-). Dd1 Dm1 -गोपकाः (for -गोचराः). —(l. 9) T3 G2 M1 चैव (for चापि). Some MSS. निस्वनाः. D4.5.7 पुण्याहोंकारशब्दाश्च वाचनेषु द्विजेरिताः. —(l. 10) Dm1 आशीर्जयाश्च; D5 आसमाशीर्गेय- (for आशीर्गेयं च). D4.5.7 °थाश्च ह्रदेश समपूरयन्.]

2 ᵃ) Ñ2 V1 B D1–7 M4 स्व(Ñ2 सु)कर्मभिश्चाप्यु(B2.4 M4 °भ्यु)पेते. —ᵇ) ⊛ Cv: पर्यवस्थानं परिचरणं । ⊛ Ś1 Ñ2 V1 B D1–2.6 M4 राजोपस्थानकारिणः. —ᶜ) Dd1 Dm1 D1.4.5 स्त्रीवर्ष(D5 °वेष)धर-; G3 त्रिवर्षवर- (sic). —D2 reads from 2ᵈ up to दा in l. 2 of 1501* in marg. —ᵈ) Ś1 Ñ2 V1 B D1–2.6 M4 नराधिपं; Dt1 Dd1 Dm1 यथा पुरा; D4.5.7 यथाविधि (for यथापुरम्).

3 ᵃ) D4.5.7 वारि (for हरि-). T2 -संयुक्तम्; M3 -संवृत्तम् (for -संपृक्तम्). —ᵇ) D4.7 उपात्तं; D5 उपाते (for

मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान् ।
उपनिन्युस्तथाप्यन्याः कुमारीबहुलाः स्त्रियः ॥ ४
अथ याः कोसलेन्द्रस्य शयनं प्रत्यनन्तराः ।
ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥ ५
ता वेपथुपरीताश्च राज्ञः प्राणेषु शङ्किताः ।
प्रतिस्रोतस्तृणाग्राणां सदृशं संचकम्पिरे ॥ ६
अथ संवेपमानानां स्त्रीणां दृष्ट्वा च पार्थिवम् ।
यत्तदाशङ्कितं पापं तस्य जज्ञे विनिश्चयः ॥ ७

G. 2. 67. 11
B. 2. 65. 15
L. 2. 71. 11

उद्धर्कं ). —$^{c}$) G1 स्थान- (for स्नान-). D4 प्रायशः स्नानशीलैस्तैर्; D6 प्रापयन्स्नानशीलज्ञाः D7 प्रायशः स्नानसंशीलैर्. —For 3, Ś1 Ñ2 V1 B D1-3.4 M4 subst.:

1501* गन्धाम्बुपरिपूर्णांश्च कुम्भान्काञ्चनराजतान् ।
उपतस्थुरुपादाय स्नापकाः पुरुषा नृपम् ।

[D4 reads up to वा in l. 2 in marg. (cf. v.l. 2). —(l. 1) B4 गंधांबु-; D1 सुगंध- (for गन्धाम्बु-). D2 तु (for च). B4 कुंभाश्चाज्ञवाचिनाम् (for the post. half). —(l. 2) Ś1 D6 समादाय (for उपा°). B4 स्नातकाः. Ś1 D6 ते नृपात्मं; M4 पुरुषैर्नं.]

4 V1 om. (hapl.? cf. 1501* and 1504*) 4–$5^{b}$. —$^{a}$) Cr.m प्राशनीयान् (as in text). Cr उपस्कारान् (sic). Ś1 Ñ2 B D1-3.4 M4 गंधवान्यसु(B1 D1-3 M4 °दु)पस्करं (B1 °स्कृतं); Dg1 Dt1 Dd1 D5 T2 G3 M1-3 Cg.k.t प्राशनीयान्यु°; D4.7 °यानि वा त्रियोः. —$^{c}$) T2 G M1 उपानिन्युस्. T1 यथाप्यन्याः; G1 तथा ह्यन्याः. Dg1 Dt1 Dd1 Dm1 उपानिन्युस्तथा पुण्याः; D4.6.7 तत्र चो(D6 तत्तत्रो)पनयांचक्रुः; M2.3 उपानिन्युरथाप्यन्याः. —For $4^{cd}$, Ś1 Ñ2 B D1-3.4 M4 subst.:

1502* यथायोगमुपाजह्रुरुपचारविचक्षणाः ।

[D2 यथायोग्यम्. B2 उपाजग्मुर् (for °जह्रुर्). Ś1 B2 D6 उपचारे.]

—After 4, Dg1 Dt1 Dd1 Dm1 D4.6.7 T G M1-3 ins.:

1503* सर्वलक्षणसंपन्नं सर्वं विधिवदर्चितम् ।
सर्वं सुगुणलक्ष्मीवत्तद्बभूवाभिहारिकम् ।
तत्तु सूर्योदयं यावत्सर्वं परिसमुत्सुकम् ।
तस्थावनुपसंप्राप्तं किंस्विदित्युपशङ्कितम् ।

[(l. 1) M1.3 सर्वं; Cm.g as above (for सर्व-). T2 अभ्युतं (for अर्चितम्). —(l. 2) Dg1 reads in marg.; T2 सगुण- (for सुगुण-). D4.7 सर्वसुगुणलक्ष्मीकं; D5 सर्वसुगु° (for the prior half). Dt1 बभूव (for बभूव). D5 [अ]वहारिकं; M1 [अ]भिहारकं. —(l. 3) Dt1 G1 ततः; D4.7 तत्र (for तत्तु). D4.6(after corr. as above).7 G1 M2 सूर्योदयात्. Dg1 तावत् (for या°). —(l. 4) M2 किंचिद् (for किंस्विद्).]

5 V1 om. $5^{ab}$ (cf. v.l. 4). —$^{a}$) D6 कथया (sic) (for अथ याः). Dg1 D4.7 G2 M2 कौश(G2 M2 °स)लेंद्रस्य. —$^{b}$) G2 शयाने. —$^{cd}$) T2 च (for तु). G2 M1 संन्यबोधयन्; Cr.m.g.t प्रत्य° (as in text). D4.6.7 याः स्त्रियो वत्सला(D6 °वत्ससमा) जग्मुर्भर्तुरप्रतिबोधनात्. —For 5, Ś1 Ñ2 B D1-3.4 M4 subst., while V1 subst. l. 2 only for $5^{cd}$:

1504* अभ्येत्य चोपचारज्ञाः शयनीये नराधिपम् ।
स्त्रियः प्रबोधयांचक्रुरादित्योदयशङ्कया ।

[(l. 1) D1-3 M4 अ(D2 व)प्यन्वेत्य (for अभ्येत्य च). M4 शयनीयाले नृपं (for the post. half). —(l. 2) M4 प्रबोधनं चक्रुर् and -कांक्षया (for प्रबोधयां° and -शङ्कया respy.).]; and then cont.:

1505* प्रबोध्यमानोऽपि यदा नाबुध्यत स पार्थिवः ।
आ सूर्योदयनात्सुप्तस्ततस्ताः शङ्किताः स्त्रियः ।

[(l. 1) Ś1 Ñ2 B1.4 प्रबुध्यमानो. V1 D2.3 न बु(D3 ब्य)-बुध्यत; B2 M4 नाप्यबुध्यत(M4 °ति); D1 न प्रबुध्यति (for नाबुध्यत स). —(l. 2) V1 आसूर्योदयात् (subm.). D2 सुप्तम् (sic) (for सुप्तस्). V1 दुःस्थाः (for ततस्ताः). M4 शंकिताभवन्.]

—After 5, Dg1 Dt1 Dd1 Dm1 T G M1-4 ins.:

1506* तथाप्युचितवृत्तास्ता विनयेन नयेन च ।
न ह्यस्य शयनं स्पृष्ट्वा किंचिदप्युपलेभिरे ।
ताः स्त्रियः स्वप्नशीलज्ञाश्चेष्टासंचलनादिषु ।

[(l. 1) Dt1 T1 अथ (for तथा). M2.3 -भूतांता. Dg1 च in marg. —(l. 3) G1 या स्त्रियः; G2 ता दीनाः. M1 -संचलनादिषु.];

while D4.6.7 ins.:

1507* न त्वस्य शयने स्पष्टं काश्चिदप्युपलेभिरे ।
इङ्गिताश्च प्रशीलज्ञाश्चेष्टाः संकुचनादयः ।

[(l. 1) D6 ननु and स्पृष्टाः (for न तु and स्पष्टं respy.). —(l. 2) D7 संकोचनादयः. D6 इङ्गितास्ता सुशीलज्ञाः श्चेष्टाः संकुचनादिषु.]

6 Dg1 reads 6 in marg. —$^{a}$) M4 भी- (for ता). Ś1 Ñ2 V1 B D1-3.4 M4 -समावि(D1.2 °दि)ष्टाः; D4.7 -गृहीताश्च; D6 -गृहीत्वा च (corrupt) (for -परीताश्च). —$^{b}$) V1 D1-3 M4 प्रेक्ष(D1.2 °इय)माणा नराधिपं. —$^{c}$) B1.3.4 Dg1 D1-3.6 प्रतिश्रोतस्. Ś1 D6 तृणाग्रेण; G2 त्रियाग्राणां (corrupt) (for तृणाग्राणां). —$^{d}$) B2 सदृशः (sic). Ś1 Ñ2 V1 B D1-3.4 M4 प्र(M4 च)चकंपिरे(B4 °इ); Dg1 Dt1 Dd1 Dm1 T1.3 M2 Cm.g.t संचकाशिरे; D6 संप्रचक्रिरे.

7 For 7–9, V1 subst. l. 5–14 of 1512*. —$^{a}$) Dt1 Dd1 Dm1 Ct संदृश्यमानानां. Ś1 Ñ2 B D4.6 अथ तासां परित्रासं (B4 °सात्); D4.7 अथ ताः संपरित्रस्ता. —$^{b}$) Ś1 D6 दृष्ट्वा दृष्ट्वा; Ñ2 B D4.6.7 दृष्ट्वा स्पृष्ट्वा (for स्त्रीणां दृष्ट्वा). M2 [अ]थ (for च). —$^{c}$) Dm1 D4.7 तत् (for यत्). —$^{d}$) Dt1 तदा; Ct as in text (for तस्य). Ś1 राज्ञे; D4.7 राज्ञो (for जज्ञे).

G. 2. 67. 12
B. 2. 65. 20
L. 2. 71. 19

ततः प्रचुक्रुशुर्दीनाः सस्वरं ता वराङ्गनाः ।
करेणव इवारण्ये स्थानप्रच्युतयूथपाः ॥ ८

तासामाक्रन्दशब्देन सहसोद्गतचेतने ।
कौसल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ॥ ९

—After 7, Dg1 Dt1 Dd1 Dm1 D4.5.7 T G M1-3 ins. :

1508* कौसल्या च सुमित्रा च पुत्रशोकपराजिते ।
प्रसुते न प्रबुद्ध्येते यथाकालसमन्विते ।
निष्प्रभा च विवर्णा च सन्ना शोकेन संनता ।
न व्यराजत कौसल्या तारेव तिमिरावृता ।
कौसल्यानन्तरं राज्ञः सुमित्रा तदनन्तरम् । [5]
न स्म विभ्राजते देवी शोकाश्रुलुलितानना ।
ते च दृष्ट्वा तथा सुप्ते उभे देव्यौ च तं नृपम् ।
सुप्तमेवोद्गतप्राणमन्तःपुरमदृश्यत ।

[ (l. 2) D5 प्रसुप्ते न. D4.5 [ प्र ]बुद्ध्येते; D7 G1 वि( G1 न )-बु°; G3 °द्धेन ( for प्रबुद्ध्येते ). G3 तथा; M3 moth-eaten ( for यथा- ). D4.5.7 यथाकाले समन्विते; M1 यथाकाले स° ( for the post. half ). —(l. 3) Dt1 G1 सा ( for the first च ). T3 शुक* *** ( lacuna ) ( for शोकेन सं° ). —(l. 4) T3 तिमिरे वृता. —(l. 6) M3 स ( sic ) ( for स्म ). M3 वि**ते ( moth-eaten ). —(l. 7) T3 G3 सुप्ता ( for दृष्ट्वा ). Dg1 Dt1 Dm1 तदा; G1 यथा ( for तथा ). G1.3 M1.3 उभौ ( sic ) ( for उभे ). D4.5.7 नृपं च तं ( by transp. ). —(l. 8) D7 [ उ ]द्गतं. Cv अतः परम् ( for अन्तःपुरम् ). T3 मलप्यत; Ctp अमन्यत ( for अदृश्यत ). —For l. 3–8, D4.5.7 subst :

1508(A)* शयन्ती मनुजेन्द्रस्य यथापैचरितं निशि ।
निद्रयापहृता त्वासीद्रामभाता विशेषतः ।
ते च सुप्ते तथा दृष्ट्वा उभे देव्यौ नृपं च तम् ।
सुप्तमेवोद्गतप्राणं जज्ञिरे ताः स्त्रियः पुनः ।
अथ तत्रापरा नार्यस्ताश्च संजातसंभ्रमाः । [5]
शङ्किताः समवेक्षन्त मृत एव नराधिपम् ।
निर्गतं सलिलं घोरं नेत्रयोरुभयोरपि ।
शीतत्वं च गात्राणां तदा बुबुधिरे स्त्रियः ।
अथ बुद्ध्वा गतप्राणं सर्वास्तिा नराधिपम् ।
तं नरेन्द्रं मविष्यन्त्यः सहसा संप्रचुक्रुशुः । [10]
ततः प्रमुमुचुः कण्ठाद्विलापानपशालिनः ।
हा भर्तरिति दुःखार्ता निपेतुश्च महीतले ।

[ (l. 1) D5 यथा जागरितं ( for °थैचरितं ). —(l. 2) D5 च ( for तु ). —(l. 3) D4.7 यथा ( for तथा ). —(l. 5) D5 याश्च ( for ताश्च ). —(l. 7) D5 विनिःश्वासतत्वं ( for निर्गतं सलिलं ). D7 नेत्रयो***रपि ( for the post. half ). —(l. 8) D5 गात्रस्य. —(l. 10) D5 नरेंद्रं तं ( by transp. ); D7 तं नरेंद्र:. —(l. 11) D4.7 कष्टाद् ( for कण्ठाद् ). —(l. 12) D5 निपेतुश् ( for °पेतुश्च ). ]

8 a) G3 सर्वाः; M3 भीताः ( for दीनाः ). —b) G1.2 M1 सस्वराम्. M3 ***नाः ( moth-eaten ). —For 8ab, D4.5.7 subst. and read after 8cd :

1509* दुःखैर्न सहितुं शेकुर्लब्धसत्त्वास्तु याः स्त्रियः ।

[ D5 क्रुशुस्सकला स्त्रियः ( for the post. half ). ]

—d) D4.7 सिंह( D7 °हैः )प्रहतयूथपाः. —Ś1 Ñ2 B D3 subst. for 8; while D1-2 M4 subst. for 7–8 :

1510* ता वेपमानाः संभ्रान्ता मृतं दृष्ट्वा नराधिपम् ।
हा नाथ हा मृतोऽसीति पतिता वै विचुक्रुशुः ।

[ (l. 1) M4 प्रेक्षमाणा ( for मृतं दृष्ट्वा ). —(l. 2) B2 sup. lin. पति in पतिता. D1-2 M4 हा महाराज हा नाथ मृतोसीति विचुक्रुशुः. ]

9 a) D4.7 हाक्रंदशब्देन. —b) D4.5.7 सहसोद्भ्रांतलोचना ( D5 °ने ); G2 M3 °सोन्नतचेतने; Cv.r.m.g as in text. —For 9ab, Ś1 Ñ2 B D1-3.6 M4 subst. :

1511* तासां तेनार्तनादेन महता शयिते तदा ।

[ D1 शयने ( for शयिते ). D1-2 M4 मृते ( for तदा ). ]

—d) Ś1 Ñ2 B D6 बुबुधाते सुदुःखिते; D1-2 M4 बुबुधातेतै-( D2 °तेते )मानसे. —After 9, Ś1 Ñ2 B D1-3.6 M4 ins.; while V1 subst. l. 5–14 only for 7–9 :

1512* हा हा किमेतदित्युक्त्वा सहसोद्वेगमागते ।
उत्थाय शयनात्क्षिप्रं राजानमुपतस्थतुः ।
दृष्ट्वा स्पृष्ट्वा च भर्तारं ते देव्यावतिदुःखिते ।
सुप्तमेवोद्गतप्राणं भूयः चुक्रुशतुस्तदा ।
तेन शब्देन संभ्रान्ताः सर्वशोऽन्तःपुरस्त्रियः । [5]
संघशश्चुक्रुशुस्तत्र कुररयस्त्रासिता इव ।
ईरितोऽन्तःपुरस्त्रीभिरार्ताभिः स स्वनो महान् ।
पुरीं तां पूरयामास बोधयन्निव सर्वशः ।
ततः संभ्रान्तमनसस्तेन शब्देन बोधिताः ।
अनाहूताश्च विविशुर्नृपवेश्मापराः स्त्रियः । [10]
ताश्च ताश्चैव संहत्य ततस्ताः सर्वशोऽङ्गनाः ।
रुरुदुश्चुक्रुशुश्चैव नृपे पञ्चत्वमागते ।
अथायोध्या पुरी कृत्स्ना तेन शब्देन मोहिता ।
सवृद्धबाला चुक्रोश राजव्यसनदुःखिता ।

[ B4 om. l. 1–3. Ś1 D6 om. l. 1. —(l. 1) D2 om. इति ( subm. ). —Ñ2 om. l. 2. —(l. 3) Ś1 D6 मृतं ( for स्पृष्ट्वा ). D1-2 M4 तेपि देव्यौ सुदुःखिते ( for the post. half ). —(l. 4) Ś1 [ उ ]द्गतं. M4 उच्चुक्रुशुः ( for चुक्रुशतुः ). D1-2 M4 ततः. —After l. 4, M4 ins. :

1512(A)* तेन शब्देन संत्रस्ता भृशमुच्चुक्रुशुः स्त्रियः ।

—(l. 5) V1 ता वेपमानाः ( for तेन शब्देन ). M4 संत्रस्ताः ( for संभ्रान्ताः ). Ś1 D6 तयोस्तद्रुदितं श्रुत्वा ( for the prior half ). Ñ2 D1 सर्वतोन्तःपुरे ( Ñ2 °पुरे वै [ hypm. ] ). —After l. 5, B3 ins. l. 11 ( var. ) for the first time, repeating it in its proper place. —B1 om. ( hapl. ) l. 6–10.

कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पार्थिवम् ।
हा नाथेति परिक्रुश्य पेततुर्धरणीतले ॥ १०
सा कोसलेन्द्रदुहिता वेष्टमाना महीतले ।
न बभ्राज रजोध्वस्ता तारेव गगनच्युता ॥ ११
तत्समुत्रस्तसंभ्रान्तं पर्युत्सुकजनाकुलम् ।
सर्वतस्तुमुलाक्रन्दं परितापार्तबान्धवम् ॥ १२

G. 2. 67. 21
B. 2. 65. 27
L. 2. 71. 21

—(l. 6) Ś1 D6 सहसा (for संचशद्). V1 नावत्त; B4 कुर्वंश; D2 कुर्वंस (sic) (for कुर्वत). —(l. 7) D5 हरितोत:स्न-. B3 सुस्वरो; B4 सुस्वनो. D2 तामिरुच्चस्वनो महान् (for the post. half). V1 D1 हरितोत:पुरे स्त्रीभिस्ताभि: स नि(D1 च)स्वनो महान्. —(l. 8) Ś1 D6 शोचयंत्येव; B3 रोदयन्त्रिव; D2 शोचन्निव. D1.2 सर्वत:. —(l. 9) B3 D1–3 मोहिता: (for बोधिता:). V1 संभ्रांतमनसस्तेन शब्देन मोहिता जना:. —(l. 10) Ñ2 तानाहूताश्च; V1 D1–3 जनाहूतापि(D2 °स्तु). Ś1 D6 आविशंत नृपाहूता; B2.4 अविशञ्जनाहूता (for the prior half). Ś1 V1 पुरस्त्रिय:; D6 M4 परस्त्रिय:. —B3 reads l. 11 for the first time after l. 5. —(l. 11) Ñ2 B3 चैताश्च; D2 ततश्च (for च ताश्च). Ś1 संहृत्य. B2.4 संचक्रो (for स्वैशो). Ś1 D6 शतशोथ सहस्रश: (for the post. half). B3 (first time) ताश्चैव संहृत्य ततस्ताश्चैव सर्वशोगनाः. —(l. 13) M4 तथा (for अथ). Ñ2 B1–3 (B3 also as above) सर्वा (for कृत्स्ना). Ś1 B1.2 D1–3.6 बोधिता; V1 पूरिता (for नोदिता). —After l. 13, B3 ins.:

1512(B)* आगता नृपतेर्वेश्म शोकेन परिपीडिता: ।

—(l. 14) V1 सवात्स्वरा (by transp.). Ś1 Ñ2 V1 B -र्दिता; D6 -[illegible] (for -दुःखिता). D2 आहूयवाल्यमुत्सुक: सर्वे व्यसनपीडिता:.]

**10** D2 om. 10[ab]. —[b]) M2 स्पृष्ट्वा (for दृष्ट्वा). M3 स्पृ * * (moth-eaten). T2 G1 M2 तं नृपं (for पार्थिवम्). —[c]) Dg1 Dt1 Dd1 Dm1 G1 M2 भर्त(Dt1 °*)ति (for नाथेति). B(ed.) परिक्रुश्य. —[d]) G2 निपेतुर्. —For 10, Ś1 Ñ2 V1 B D1–3(D2 l. 2 only for 10[cd]).6 M4 subst. and read after 13:

1513* ततो भृशार्ता कौसल्या सुमित्रा च सुदु:खिता ।
निपत्य पृथिवीपृष्ठे वडवेव व्यवर्तत ।

[(l. 1) D1 कौशिल्या. Ś1 D6 चैव (for च सु-). —(l. 2) V1 D1–2 M4 धरणीपृष्ठे. Ś1 D6 बहुधेव (for वडवेव). Ś1 D6 व्यवेष्टता; Ñ2 B2.3 (orig.) व्यचेष्टि(B3 °ष्ट)तां; B1.4 व्यचेष्टत; B3 (*sup. lin.*) व्यचष्टत; D1 व्यवर्तता; D2.3 न्यवर्तत.];
—All are followed by 1515*
while D4.5.7 subst. for 10:

1514* सुमित्रया तु कौसल्या सह स्पृष्ट्वा जनाधिपम् ।
वदन्ती हार्यपुत्रेति निपपात महीतले ।

[(l. 1) D5 च and नराधिपं (for तु and जना° respy.).]

**11** T2 om. (hapl.) 11[ab]. —[ab]) T1 कौसलेंद्र-. ⊕ Ct : अयोध्याजनपदवाची कोशलशब्दस्तालव्यमध्य: कौसल्यापितृदेशवाची तु दन्त्यमध्य: । ⊕ Dg1 Dt1 Dd1 Dm1 T1 चेष्टमाना. For वेष्टमाना cf. R. 1. 2. 11[b]. D4.5.7 सह(D5 सा हि) ताभि: सप(D4 °*)त्नीभिर्वेष्टंती(D4 °ष्टिता; D7 °ष्टितं) जगतीतले. —[c]) Dg1 Dt1 Dd1 Dm1 भ्राजते; G1 बभौ तु; G2 M2.3 बभ्रा(M3 °*)जे. —[d]) Dd1 Dm1 T G1.2 M1–3 गगनाच्च्युता. —For 11, Ś1 Ñ2 V1 B D1–3.6 M4 subst. and read after 1513*:

1515* सपत्न्या सह दु:खार्ता वेष्टमाना धरातले ।
पांसुरूषितसर्वाङ्गी कौसल्या न व्यराजत ।

[(l. 1) Ś1 इव (for सह). Ñ2 B1.2.4 चेष्टमाना; B3 वेप° (for वेष्ट°). V1 D1–3 M4 चे(D1 M4 वे)ष्टंती धरणीतले (for the post. half). —(l. 2) Ñ2 V1 B D1–3 पांसु-. V1 D1–3 -गुंठित-; B1 -कीर्ण-; D6 -भूषित- (for -रूषित-). Ñ2 B1.2 M4 व्यरोचत (for °राजत).]

—After 11, Dg1 Dt1 Dd1 Dm1 D4.5.7 T G M1–3 ins.:

1516* नृपे शान्तगुणे जाते कौसल्यां पतितां भुवि ।
अपश्यंस्ता: स्त्रिय: सर्वा हतां नागवधूमिव ।
तत: सर्वा नरेन्द्रस्य कैकेयीप्रमुखा: स्त्रिय: ।
रुदन्त्य: शोकसंतप्ता निपेतुर्गतचेतना: ।
ताभि: स बलवान्नाद: क्रोशन्तीभिरनुद्रुत: । [5]
येन स्फीतीकृतं भूयस्तद्गृहं समनादयत् ।

[D4.5.7 om. l. 1 and 2. —(l. 2) Dg1 हता. —(l. 4) Dm1 रुदंत: (sic); T2 रुदत्य:. Dt1 -संतप्तां. M2 गतचेतस:. D4.5.7 समीक्ष्य न(D5 °भावहन्न)हीतले (for the post. half). —(l. 5) D4.5.7 सह नादात्मा(D5 °ना)द:. Dg1 T2 अभिद्रुत:. —(l. 6) D5 वेन (for येन). Dg1 स्फीतीकृतं; Dt1 Dd1 D5 Ct स्फीतीकृतो; Dm1 T2.3 M1 Cr स्फीति°; M2 हीती°; K(ed.) Cm.g स्थिरी°; Cv as above (for स्फीतीकृतं). D4.7 येन स्फारीकृतेनाशु (for the prior half). Dt1 Dm1 D4.5 समनादयन्; Cm.t °यत् (as above).]

**12** [a]) Ś1 Ñ2 V1 B1–3 D1–3.6 M4 समुद्विग्न(Ś1 D6 °ग्नम्)-; B4 समुद्भ्रांत-; Dt1 Dd1 Dm1 परित्रस्त-; D5 °स्तं (for समुत्रस्त-). Ś1 D6 M4 उद्भ्रांतं(M4 °त-); Ñ2 V1 B3 Dt1 D2 -संभ्रांत-; B4 -संत्रस्तं. D5 तासर्वत: सुसंभ्रांतं. —[b]) V1 D2 T2 -समाकुलं; M2 -जनावृतं. D4.5.7 पर्येक्षुनयनाकुलं. —[c]) Dd1 Dm1 D5 T2 G1.2 तुमुलाक्रांतं; D4.7 विपुलाक्रंदं. —[d]) D4.5.7 परिदेवार्तबांधवं. —For 12[cd], Ś1 Ñ2 V1 B D1–3.6 M4 subst.:

1517* परिदेवितार्तस्तनितवदितोत्क्रुष्टमाकुलम् ।

[Hypm. D2 परिदेवन- (for °वित-). Ś1 B1 D1–3.6 -स्त-(D1.3.6 स्व)नितं. Ñ2 B1–3 -[उ]त्कुष्ट(B3 -[उ]त्तान)संकुलं; V1 -[उ]त्थितनादितं; D1–3 M4 -[उ]त्कृष्टनादितं.]

G. 2. 67. 22
B. 2. 65. 28
L. 2. 71. 21

सद्योनिपतितानन्दं दीनविक्लवदर्शनम् ।
बभूव नरदेवस्य सद्म दिष्टान्तमीयुषः ॥ १३
अतीतमाज्ञाय तु पार्थिवर्षभं
यशस्विनं संपरिवार्य पत्नयः ।
भृशं रुदन्त्यः करुणं सुदुःखिताः
प्रगृह्य बाहू व्यलपन्ननाथवत् ॥ १४

इति श्रीरामायणे अयोध्याकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

## ६०

तमग्निमिव संशान्तमम्बुहीनमिवार्णवम् ।
हतप्रभमिवादित्यं स्वर्गस्थं प्रेक्ष्य भूमिपम् ॥ १
कौसल्या बाष्पपूर्णाक्षी विविधं शोककर्शिता ।
उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत ॥ २

13 ᵃ) V1 -निर्वतित-; B1 -निपातित-; Dg1 -निवर्तित- (for -निपतित-). Ś1 Ñ2 V1 B D1-3.5.6 M3 -[आ]नर्थं (for -[आ]नन्दं). —ᵇ) Dt1 दीनं. M3 -∗∗वदर्शनं. Ś1 Ñ2 V1 B D1-3.6 M3 विध्वस्तशयनासनं (Ñ2 B2.4 °शनं); D4.6.7 दीप- (D5 °प्र)प्रम्लानदर्शनं. —D2 om. 13ᶜᵈ. —ᵈ) Ś1 D4-7 G1 गृहं; V1 तदा; B2-4 सद्यो (for सद्म). D2 दिष्टांतम्; D6 दृष्टांतम्. Ś1 D4-7 आगतं; V1 आयुषः; D1 S एयुषः (for ईयुषः). —After 13, Ś1 Ñ2 V1 B D1.3 (after 13ᵃᵇ).5.6 M3 read 1513* and 1515*.

14 ᵃ) Ś1 Ñ2 V1 B D1-7 M3 व्यतीतम् (for अ°). V2 च; D5 om. (subm.) (for तु). —ᵇ) D5 मनस्विनं. Ś1 Dt1 D6 T2 तं (for सं-). Dg1 संपरिवारि (sic). Ś1 Ñ2 V1 B D1-3.6 M3 ताः स्त्रियः; G3 योषितः (for पत्नयः). —ᶜ) Ñ2 B रुदत्यः; G1 M3 नर्दंत्यः; M1 जुदंत्यः (for रुदन्त्यः). Ś1 Ñ2 V1 B D1-3.6 M3 करुणाक्षरा गिरः. —ᵈ) M3 प्रसार्य. Ś1 Ñ2 B1.3.4 D2.5.6 T2 G1 बाहून्; Dg1 बाहौ (for बाहू). M3 प्रगृ∗∗हू (moth-eaten). Ś1 Ñ2 V1 B D1-3.6 M3 व्य(V1 ह)लपंस्तु (Ś1 V1 D1.3.6 M3 °त; D2 °ब [sic]) सर्वशः; D4.7 व्यलपंस्त्वना°.

Colophon. —*Sarga name*: Ś1 V1 D1-3.6 अंतःपुर (D2 °र)विलापः; Ñ2 B2-4 दशरथमरणांतःपुराक्रंदः; B1 दशरथस्वर्गारोहणं; D4.7 स्त्रीविलापः; D5 असंगतिकः. —*Sarga no.* (figures, words or both): B1 D2.6 om.; Ś1 71; Ñ2 V1 D7 M4 67; B2.3 D4 66; B4 62; Dg1 Dt1 Dd1 Dm1 T G M1-3 65; D1 123; D2.3 70. —After colophon, D6 G M3 conclude with श्री(D6 om.)रामाय नमः; T2 श्रीरामचन्द्राय नमः.

### 60

☞ Ñ1 missing for Sarga 60 (cf. v.l. 1058*). Ś1 Dm1 begin with ॐ; M3 with श्रीरामाय नमः.

1 ᵃ) B3 संक्रांतं; D5 संपर्क (for संशान्तम्). —M3 reads 1ᵇᶜ twice. —ᵇ) Ś1 Ñ2 V1 B D1-3.6 M3 (both times) संशोषितम्; G3 तोय° (for अम्बुहीनम्). D2 महार्णवे (for इवा°). —ᶜ) Ś1 Ñ2 V1 B D1-3.6 M3 (both times) अस्तंगतम्; Dt1 Dd1 Dm1 गतप्रभम् (for हतप्रभम्). —ᵈ) Ś1 V1 B D1-7 M2.3 स्वर्गतं (for °स्थं). M3 moth-eaten for स्थ पार्थि. V1 T G3 M1.2 पार्थि(M3 ∗∗)वं (for भूमिपम्).

2 ᵃ) T2 पुत्रशोकार्ता (for बाष्पपूर्णाक्षी). —ᵇ) G3 M1 Ck विधवा (for विविधं). D5 श्रमकर्शिता. —ᵈ) G3 पर्यभाषत (for प्रत्य°). D4.5.7 व्यथिता विललाप ह. —For 2, Ś1 Ñ2 V1 B D1-3.6 M3 subst.:

1518* द्विविधेनापि दुःखेन कौसल्या भृशदुःखिता ।
भर्तुः पादौ प्रगृह्यार्ता विललाप सुदुःखिता ।

[(l. 1) B3 M3 विविधेन. B3 [अ]ति-; D3 [प]र (for [अ]पि). V1 D1-3 M3 शोकेन (for दुःखेन). M3 भृशविह्वला (for °दुःखिता). —(l. 2) V1 D2.3 M3 भूमौ तदा; B1 तपस्विनी; D1 पुनस्तदा (for सुदुःखिता).]

—Thereafter all the above MSS. cont.:

1519* कृतपुण्योऽसि नृपते शुद्धसत्त्वश्च मानद ।
यस्त्वं प्राणान्परित्यज्य नाथ शोचसि राघवम् ।
पुत्रशोकसमुद्भूतो हृन्मनोदेहतापनः ।
त्वत्प्राणहरणो व्याधिर्मामनाथां न बाधते ।
सत्यसंधे महाभागे प्रधानाभिजनात्मनि । [5]

सकामा भव कैकेयि भुङ्क्ष्व राज्यमकण्टकम् । त्यक्त्वा राजानमेकाग्रा नृशंसे दुष्टचारिणि ॥ ३

एष त्वय्यनुरूपो वै भावः कलुषवेदिनि ।
अहमेवाशुद्धसत्त्वा नीचा चाल्पसौहृदा ।
अजीवनार्हा जीवामि यस्त्वयाद्य विनाकृता ।
मृत्युरस्यामवस्थायां प्रशस्तस्ते नराधिप ।
जीवितं मम चाप्यस्यामवस्थायां विगर्हितम् । [10]
अवस्थायामवस्थायां तत्तद्भवति पूजितम् ।
पूजितं मरणं तस्य यस्य जीवितमीदृशम् ।
यश्च शुद्धस्वभावस्त्वं पुत्रशोकार्तया मया ।
उक्तोऽस्यसकृत्परुषं तन्मां दहति कल्मषम् ।
देवोपम नमस्तेऽस्तु शुद्धभाव महीपते । [15]
समन्युरेवासि मृतः क्षामये त्वां प्रसीद मे ।
पुत्रशोकार्तया ह्युक्तो यन्मयास्यकृतज्ञया ।
तद्देवसत्त्व नामुत्र मर्तुमर्हसि मे प्रभो ।
अतिक्रमः कस्य नास्ति विदुषोऽपि महीपते ।
अतिक्रममतो मे त्वं मूढायाः क्षन्तुमर्हसि । [20]
कृत्वानर्थं मूलहरं राज्यलोभाद्विगर्हितम् ।
प्राप्तासि निरयं क्षुद्रे कैकेयि दृढनिश्चये ।

[(l. 1) D1 गुणवन्योसि. M4 राजेन्द्र कृतपुण्योसि (for the prior half).—(l. 2) V1 D1.2 M4 नानु-; D3 मानु- (for नाथ).—(l. 3) Ś1 D6 दारुणो; M4 हीमयो (for हुन्मनो-).—(l. 4) V1 कुरु; D6 तव (for त्वद्-). Ś1 D6 -प्राणहरणात् (for °णो). V1 मामनार्या; D2 मामनार्यां; M4 मम नार्य (for मामनार्यां). V1 M4 प्रबाधते; D1.2 तु बाधते (for न बाधते).—(l. 5) V1 D1-3 M4 इष्यते (M4 °मती) शुभतत्त्वे (for the prior half). V1 -[अ]भिपनात्मनि (sic).—(l. 6) Ś1 D6 न हि युष्मद्विधे युक्तो; V1 D1-3 M4 एष त्वय्ये (D2 °वे; D3 °यी)वानुरूपो (for the prior half). D2 कलुषवेदिना.—(l. 7) V1 D1.3 अशुद्धसत्त्वाहमेव (D2 °त्वा ह्य राम); M4 अशुद्धभावा चाहमेव (hypm.) (for the prior half). D1 निर्वाचा; M4 तथा च (for नीचा च). V1 दृढचित्ता विगर्हिता; B1 नीता चानु (sup. lin. also द्द)लसौहृदा (for the post. half). D2 अशुद्धसत्त्वाहमनिनीता चाद्धसौहृदा.—(l. 8) Ś1 D6 M4 वा (for यद्). Ñ2 B [अ]हं; M4 [अ]पि (for [अ]द्य). Ñ2 B3 निराकृता (for विनाकृता).—(l. 9) V1 D1 प्रशस्तं; D6 प्रवृत्तम् (for प्रशस्तस्ते).—(l. 10) D2.3 वा (for च). Ś1 D6 न तु मे जीवितं कल्याण (for the prior half).—V1 D1-3 M4 om. l. 11-12.—(l. 11) B1 (marg. also as above) समस्तायां (for second अवस्थायां).—(l. 13) Ś1 D6 यत्; V1 D1-3 यदि; B3 यथ; M4 यदि (for यश्च). Ś1 D6 तु (for त्वं).—(l. 14) B3 [अ]नेपं (for [अ]सकृत्). Ś1 D6 पक्षं गुरुरुक्तोसि; V1 D1-3 M4 असकृत्परुषाण्युक्त (for the prior half). Ś1 D6 M4 मा (for मां). Ś1 D1.6 किल्बिषं (for कल्मषम्).—(l. 15) D2 om. ऽस्तु. V1 शुभमेवं; D3 °भाव (for °भाव).—(l. 16) D2 इव (for एव). Ś1 D6 समन्युर्नासि मयि तत् (for the prior half). Ñ2 V1 B क्षमये (sic) (for क्षामये).—(l. 17) Ś1 V1 D6 [अ]युक्तो; B2 त्वक्तो; B3 [इ]त्युक्तो (for युक्तो). V1 [अ]स; B3 (sup. lin. also).4 हि (for [अ]सि). Ś1 [अ]कृतज्ञया; B2 [अ]कृतस्तया (sic) (for [अ]कृतज्ञया).—(l. 18) V1 तदेतास्तस्त्वमुत्सृज्य; B2 D2.3 तद्दे (B2 °दे)व सत्त्वं नामुत्र; D1 तन्मे तत्सत्त्वं नामुत्र (for the prior half). Ñ2 B1.3 मे चार्हसि (for अर्हसि मे). Ś1 D6 [ऽ]नघ (for प्रभो).—(l. 19) B3 विस्मयो (for विदुषो). Ñ2 B1.3 वा (for ऽपि). D3 महामते.—(l. 20) D6 अर्हति (for °सि).—(l. 21) D3 कृतानर्थं (for कृत्वा°). V1 राज्यमोहाद्; D1 लक्ष्य लोभाद्; D3 त्यज मोहाद्; M4 राज्यलोभ- (for राज्यलोभाद्). M4 -विगर्हिता (for विगर्हितम्).—(l. 22) D2 प्राप्नोषि (for प्राप्तासि). D1 परमं भद्रे (for निरयं क्षुद्रे). V1 M4 दृढनिश्चया; B2 शठनिश्चये.]

—After 2, D4.5.7 ins.:

1520* अशोच्यं बत शोचामि या प्रेतमनुशोचति ।
नरेन्द्र कृतकृत्यं त्वां मुक्तं पुत्रानुशोचनात् ।
पुत्रशोकादयं व्याधिर्बलवान्दीर्घवेदनः ।
स्वप्राणहरणो मृत्युर्ममार्य न हरत्यसून् ।
सत्यसंधे महाभागे प्रसादाभिजितात्मनि । [5]
न हि युष्मद्विधे युक्तो भावः कलुषवेदिनि ।
अहमेवास्मि नीचा च कदर्या न च सज्जना ।
अजीवनार्हा जीवामि दुर्बलं प्राणिनो हितम् ।
अवस्थानमवस्थायां तत्तद्भवति पूजितम् ।
पूजितं मरणं तस्य यस्य जीवितमीदृशम् । [10]
पुत्रशोकादनुत्तीर्णा भर्तृशोकपरिप्लुता ।
रौद्रा विपरिवर्तामि विपन्ना शोकसंकटे ।
इदं मूलहरं लोभादनर्थमुपपाद्य हि ।
काममाप्नुहि कैकेयि लोके हि सुमहद्यशः ।

[(l. 1) D4.7 अनुशोचिमि (sic) (for °चति).—(l. 2) D5 मुक्तं पुत्रस्य शासनात्; D7 मुक्तं त्वानु° (for the post. half).—(l. 4) D4 [अ]थ (for [अ]यं).—(l. 5) D5 महाभाके (for °भागे).—(l. 6) D5 यन्मे (for न हि). D7 मुचो (for युक्तो).—(l. 7) D5 अहमेकाकिनी बाला (for the prior half).—(l. 8) D4(also).5 दुर्लभं (for दुर्बलं). D5 प्राणिनां हि तत्.—(l. 9) D5 अवस्थायाम् (for °नम्). D5 न त्वद्- (for तत्तद्).—(l. 10) =l. 12 of 1519*. D5 मरणं तस्य पश्यामि (for the prior half).—(l. 13) D5 इमं (for इदं).—(l. 14) D7 om. (hapl.) from the post. half of l. 14 up to 3ᵃ. D5 च (for हि).]

3 D7 om. 3ᵃ (cf. v.l. 1520*).—ᵇ) Ñ2 B2 भुक्त्वा (for भुङ्क्ष्व). D7 अकं ** (for अकण्टकम्).—ᶜ) D5 हित्वा; D6.7 हत्वा (for त्यक्त्वा). D4.5.7 एवा (D5 °वो)ग्रे; T2 G2 एकाग्र-; Ct as in text (for एकाग्रा).—ᵈ) D5 दीनसे (for नृशंसे). D4.5.7 पापकारिणि (D5 °णः [sic]) (for दुष्टचारिणि).—For 3ᶜᵈ, Ś1 Ñ2 V1 B D1-3.6 M4 subst.:

G. 2. 68. 30
B. 2. 66. 4
L. 2. 72. 30

विहाय मां गतो रामो भर्ता च स्वर्गतो मम ।
विपथे सार्थहीनेव नाहं जीवितुमुत्सहे ॥ ४
भर्तारं तं परित्यज्य का स्त्री दैवतमात्मनः ।
इच्छेज्जीवितुमन्यत्र कैकेय्यास्त्यक्तधर्मणः ॥ ५
न लुब्धो बुध्यते दोषान्किंपाकमिव भक्षयन् ।
कुब्जानिमित्तं कैकेय्या राघवाणां कुलं हतम् ॥ ६

---

1521* पतिं प्राणैर्वियोज्यैवं विकृते निर्वृता भव ।

[ B2 विमोक्ष; D5 M3 वियुज्य ( for वियोज्य ). Ś1 [ ए ]व; Ñ2 B1.2.4 त्वं; B3 M3 [ व ]हं ( for [ ए ]वं ). Ś1 D5 विकृते; M3 विकृता ( for विकृते ).]

4 a) M3 मा ( for मां ).—b) D4.5.7 विपिने ( for विपथे ). D5 सार्थहीने च. —Dg1 reads 4d in marg. —d) D4.5.7 न वर्तयितुम् ( for नाहं जीवितुम् ). —For 4, Ś1 Ñ2 V1 B D1-3.6 M3 subst. and read after 1532*:

1522* विहाय मां वने रामो भर्ता च त्रिदिवं गतः ।
सार्थादिव परिभ्रष्टा कापथे विचराम्यहम् ।

[ ( l. 1 ) M3 विना च ( for विहाय ). V1 D5 मा ( for मां ). V1 D1-3 M3 गतो ( for वने ). V1 D1-3 M3 वनं भर्ता च स्वर्गतः ( for the post. half ). —( l. 2 ) V1 सत्वात्; B4 स्वार्थाद् ( for सार्थाद् ). Ś1 D5 कुपथे ( for कापथे ).]

—Thereafter all the above MSS. ins. a passage relegated to App. I ( No. 20 ).

5 a) Dt1 तु; Dd1 Dm1 T3 च; D4.5.7 हि; G2 सं- ( for तं ). Ct.p परित्यज्य ( for °त्यज्य ). —b) D4.7 जीवितम्; M2 दै * * म् ( for दैवतम् ). —c) T3 इच्छेद् ( for इच्छेज् ). D4.7 जीवितम् ( for जीवितुम् ). —d) Dg1 G1.3 M3 त्यक्त-धर्मिणः; Cr.m.g.t as in text ( for °धर्मणः ). D4.5.7 कैकेयीं धर्म( D5 पाप )चारिणीं. —For 5, Ś1 Ñ2 V1 B D1-3.6 M3 subst.:

1523* सुखभोगार्थदातारं दैवतं परमं पतिम् ।
का त्यक्त्वा त्वरते नारी लुब्धा प्राणैर्वियोजयेत् ।

[ ( l. 1 ) Ñ2 -भोगायु-; B3.4 -भोगाय- ( for -भोगार्थ- ). V1 पितरं ( for परमं ). —( l. 2 ) V1 त्यक्ता; D2 त्यगा ( sic ) ( for त्यक्त्वा ).]

—After 5, D4.5.7 ins.:

1524* वैधव्यमयशश्चेदं प्रेत्य चाकुशलं महत् ।
कर्मणानेन नीतासि लघु मे राज्ञि न प्रियम् ।

[ ( l. 1 ) D7 चाकुशलं. —( l. 2 ) D5 तेन ( for [ अ ]नेन ). ]

6 a) T3 लुब्धा ( sic ). D4 न लब्धो बध्यते दोषात्. —b) Dm1 विपाकम्; M3 किंपापम्; Cm as in text ( for किंपाकम् ). —c) M3 -निमित्तः ( for -निमित्तं ). D4.5.7 कैकेयि ( for कैकेय्या ). Ś1 D5 क्व वा निमित्ते कैकेयि. —d) Ś1 D4-7 रघूणां ते. —For 6, Ñ2 V1 B D1-3 M3 subst., while Ś1 D5 subst. for 6ab:

1525* लुब्धः कार्यमकार्यं वा न कीर्तिं निरयं न च ।
न धर्मं नापि वाधर्मं वेत्ति नैवायतीहितम् ।

[ ( l. 1 ) Ś1 D5 कृत्वा ( for लुब्धः ). V1 D1-3 M3 लुब्धो न ( D2 °ब्धेन; M3 °ब्धा न [ sic ] ) कार्यं नाकार्यं ( for the prior half ). Ñ2 तु ( for first न ). V1 D1-3 M3 अनर्थं ( for निरयं ). D1.3 M3 नर्थं ( for न च ). —( l. 2 ) Ś1 V1 D3.5 चापि ( for नापि ). Ś1 V1 D3.5 नाधर्मं; B1 [ अ ]धर्मं वा ( by transp. ); B3 D1.2.6 M3 चा°; B4 * धर्मं ( for वाधर्मं ). Ś1 D5 वेत्ति ( for वेत्ति ). Ś1 D5 नचेहितं; V1 [ आ ]मितं हितं ( sic ); B1 D1 हिता-हितं; D3 [ अ ]हितं हितं ( for [ आ ]यतीहितम् ).]

—Thereafter all the above MSS. cont.:

1526* अनियोगनियुक्तेन त्वया राज्ञा महात्मना ।
प्राणेभ्योऽपि प्रियः पुत्रो रामः प्रव्राजितो वनम् ।
यथा प्राणैः प्रियो रामस्त्यक्तो राज्ञा महात्मना ।
तद्वियोगात्तथा तेन त्यक्ताः प्राणाः सुदुस्त्यजाः ।
वैधव्यमयशश्चेदं लोके चैव विगर्हितम् । [5]
लोभात्त्वया प्रयोऽप्यर्था यथाहास्तत्र मे प्रियम् ।
श्रीमानिन्दीवरश्यामश्चारुपद्मदलेक्षणः ।

[ ( l. 1 ) Ś1 D5 त्वद्वियोग-; V1 D1-3 अनियोगे; M3 °योग्ये ( for अनियोग- ). D1 [ ऽ ]नुयुक्तेन; D2 नियोगेन; D3 [ ऽ ]तियुक्तेन ( for -नियुक्तेन ). Ś1 D5 राज्ञा चैव ( for त्वया राज्ञा ). D3 मनस्मना. —( l. 2 ) V1 D1-3 M3 प्राणैः( D3 °णः ) प्रियतरः पुत्रो ( for the prior half ). —( l. 3 ) V1 D1-3 M3 यद्( M3 °त्वं ) प्राणैः( D3 °णा ) प्रियतरं( M3 °रो ) रामं प्रव्राज्य कानने( M3 रामो व्रज्या महात्मना ). —( l. 4 ) V1 B4 त्वद्-; M3 त्वन्- ) for तद्- ). M3 -नियोगात् ( for -वियोगात् ). V1 मनागेन; D1 M3 व ( D1 त )थानेन; D3 यनाधनेन ( sic ) ( for तथा तेन ). —( l. 5 ) V1 B2 D1.3 M3 चैव( B2 °वं ) ( for चेदं ). D3 वैधव्यमयशस्त्वं च ( for the prior half ). Ś1 D5 लोके चेदं; V1 D1.3 लोके न च; D2 कर्म चेदं ( for लोके चैव ). Ñ2 B3.4 विगर्हितं, M3 लोके वचनगर्हितं ( for the post. half ). —( l. 6 ) V1 लोभात्त्वया; D1 लोभात्तैवा ( for लोभात्त्वया ). V1 D1.3 M3 शोभनं ( for मे प्रियम् ). D3 लोभात्त्वमेव जानासि कृतं कर्म न शोभनं. —( l. 7 ) M3 पद्मपत्र- ( for चारुपद्म- ).]

—After 6, D4.5.7 ins.:

1527* त्वद्वियोगानियुक्तेन महाराजेन राघवः ।
वनं प्रस्थापितो रामो नव वर्षाणि पञ्च च ।

—D4.5.7 cont.; Dg1 Dt1 Dd1 Dm1 T G M1-3 ins. after 7:

1528* स मामनाथां विधवां नाद्य जानाति धार्मिकः ।

[ T3 M1 [ अ ]पि; G2 वि- ( for [ अ ]द्य ). T3 G2 M1-3 राघवः ( for धार्मिकः ).]

G. 2. 112. 9
B. 2. 104. 8
L. 2. 117. 9

दक्षिणाग्रेषु दर्भेषु सा ददर्श महीतले ।
पितुरिङ्गुदिपिण्याकं न्यस्तमायतलोचना ॥ ६
तं भूमौ पितुरार्तेन न्यस्तं रामेण वीक्ष्य सा ।
उवाच देवी कौसल्या सर्वा दशरथस्त्रियः ॥ ७
इदमिक्ष्वाकुनाथस्य राघवस्य महात्मनः ।
राघवेण पितुर्दत्तं पश्यतैतद्यथाविधि ॥ ८
तस्य देवसमानस्य पार्थिवस्य महात्मनः ।
नैतदौपयिकं मन्ये भुक्तभोगस्य भोजनम् ॥ ९
चतुरन्तां महीं भुक्त्वा महेन्द्रसदृशो भुवि ।
कथमिङ्गुदिपिण्याकं स भुङ्क्ते वसुधाधिपः ॥ १०
अतो दुःखतरं लोके न किंचित्प्रतिभाति मा ।
यत्र रामः पितुर्दद्यादिङ्गुदीक्षोदमृद्धिमान् ॥ ११

---

[ (l. 1) D5 दुःकर, D1.2 सौमित्रे (sic); D5 सुपुत्रे (for सुमित्रे). —(l. 2) Ś1 Ñ B D6 शुश्रुषते (for °षति). Ś1 D6 शु श्रूषेण (for [अ]नुरागेण). Ś1 जयेष्ठो पु; Ñ1 बो ज्येष्ठ-; Ñ2 B बो ज्येष्ठ (by transp.) (for ज्येष्ठं बो). Ś1 Ñ B D1.2.6 वने (for विल). —(l. 4) Ñ1 B D1.2 -चुरेषु (for -चुरेषु). D5 om. (hapl.?) वनेषु. G(ed.)सीतया (for भार्यया). Ś1 D6 अयुष्य मानुषी राज्यलीलया सह भार्यया. —Ś1 Ñ B1.3.4 D6 om. l. 5. —(l. 6) Ś1 D6 शोककर्शिता; B3(*sup. lin.* also).4 °विह्वला; L(ed.)शोकविह्वला (for बाष्पविह्वला). —(l. 7) Ś1 Ñ B D6 (इ)ङ्गुद- (for [इ]ङ्गुदि-). D1.2 -पिण्याकं (for °कैः). B4 निवापं (for निवाप). ]

—D5 cont. after l. 1 of 2188*; Dg1 Dt1 Dd1 Dm1 D4.6.7 S ins. after 5:

2189* अपन्यमपि ते पुत्रः कृतवान्न तु गर्हितः ।
भ्रातुर्यत्सर्वसहितं सर्वं तद्विहितं गुणैः ।
अयाप्यमपि ते पुत्रः क्लेशानामतथोचितः ।
नीचानर्थसमाचारं सज्जं कर्म प्रमुञ्चतु ।

[ D4.6.8.7 om. l. 1. —(l. 1) M4 कृतवानर्थगर्हितं (for the post. half). —(l. 2) Dt1 T1 G1 -रहितं; Cv.r.m.g.k as above (for -सहितं). G2 damaged from हि to गु. Dt1 G1 गर्हितं; Cv.r.m*p*.g as above (for विहितं). —(l. 3) T3 पुत्र (for °त्रः). M4 अयाहमपि पुत्रस्ते (for the prior half). D4.6.8.7 अयाहा( D4.7 अयाहा ) लियपुत्रस्ते क्लेशेषा सिक्तो( D6 °तो )चितः. —(l. 4) Dg1 -समाचारान्; M4 -समाचार-; Cg -समाचारं( as above ). D4.8 नीचमर्थसमाचारं; D4.7 नीचकर्मसमाचारं (for the prior half). D4.6.7 सदा; D5 दास- (for सज्जं). D3 T3 प्रमुञ्चति; D4 समुञ्चति; M4 विमुञ्चति. ]

—Thereafter D5 cont. l. 6 of 2188*.

6 ab) Ś1 Ñ V1 B D1.3.6 स( V1 तु )पुष्पेषु( B4 °ष्प ) निवेशि( Ś1 D6 °शयि )तं (for ab). D4.6.8.7 सा ददर्श नदीतीरे दक्षिणाग्रगतेषु( D6 पालतेषु; D5 °प्रकरेषु )हि. —c) V1 D1.3 सा तमिङ्गुदि-; D4.6.8.7 दर्भेष्विङ्गुदि-( D5 °द- ); T2 M3.4 पितुरिङ्गुद-. Ś1 Ñ B D6 उपहारं पितुर्दत्तं. —V1 D1.3 om. 6d–7a. —d) Ś1 Ñ B D6 भर्तुर्; D4 नित्यम्; M4 तुलम् (for न्यस्तम्). B2 बादाय (for आयत-). D5 -लोचनं (for °ना).

7 V1 D1.3 om. 7a (cf. v.l. 6). —a) D4.6.7 तद्भूमौ; M4 तद्दर्भे (for तं भूमौ). D2.4.8.7 पितुरर्थाय; M4 पितुरासेन (for °रार्तेन). Ś1 Ñ B D6 सा त( B4 °द )मिङ्गुदिपिण्याकं. —b) D4.6.7 M4 न्युप्तं (for न्यस्तं). Dt1 धर्मेण (for रामेण). D3.5 दृश्यति( D3 °ति ) (sic); D4.7 पश्य हि (for वीक्ष्य सा). Ś1 Ñ V1 B D1.3.6 दृष्ट्वा हि( D5 °प [before corr. °पि] )दुःखदुःखिता( B4 °ताः ). —c) V1 D1 प्रेक्ष्य (for देवी). —d) D4.7 सर्वाभरणभूषिता.

8 a) V1 D1.3 अयम् (for इदम्). Ñ2 B D4.6.8.7 -नाथेन (for -नाथस्य). —b) V1 D1.3 स्वर्गतस्य (for राघवस्य). Ś1 Ñ B D4–7 राघवेण महात्मना. —d) Dg1 पश्यस्व (sic) (for पश्यत). V1 D1 [इ]मं; D3 [इ]मं; M3 [अ]द्य (for [ए]तद्). Dt1 यदि (for -विधि). —For 8cd, Ś1 Ñ B D4.6–7 subst.:

2190* पितुरिक्ष्वाकुनाथस्य न्युप्तं पश्यत याद्दशम् ।

[ Ś1 D6 पितुरिङ्गुदिपिण्याकं (for the prior half). B2 न्युप्तं; D4 प्रप्तं; D7 प्राप्तं (for न्युप्तं). B1 पश्यत वा मुप्तं (sic); D6 पश्य मयाहृतं (sic). ]

9 a) D4.6.7 देव-; D5 देवि (for तस्य). Ś1 Ñ V1 B D1.2 -समस्येदं; D4.6 -समस्यास्य; D4.7 -समस्यापि; M4 -सम-स्याहं (for -समानस्य). —b) V1 D1.3 भर्तुर्मे विदितात्मनः. —c) V1 औपायिकं (for औप°). —d) D5 भुक्त-; D3 भुक्ताः; G2 भर्तुर् (for भुक्त-). V1 D4.7 -भोज्यस्य (for -भोगस्य). Ñ2 बंधने (for भोजनम्). B4 भक्तभोगस्य भाजनं (sic).

10 a) B2.3 चतुरन्तां (for °न्तां). Dd1 Dm1 G3 भुंक्त्वा. —b) D5 महेंद्रस्य दत्तो (sic). Ś1 Ñ B D6 T3 M3 विभुः (for भुवि). —c) Ś1 Ñ2 B D4.6–7 T3 M4 इंगुद-; M3 पेंगुदि-; M3 पेंगुद- (for इङ्गुदि-). —d) B2 संभुंक्ते (for स भुङ्क्ते). V1 D1.3 पृथिवीपतिः.

11 a) D5 T3 ततो; D5 अहो (for अतो). —b) Ś1 Ñ V1 B Dt1 D1–4.6–7 मे; Dg1 Dd1 Dm1 G1 मां; D4 वै (for मा). —D4.7 om. (hapl.) from 11c up to l. 1 of 2191*. —c) Ś1 Ñ1 दत्तो (sic); D6 दत्ते (sic); M4 दत्तम् (for दद्याद्). —d) Ś1 D6 तापसाचारमीदृशः; Ñ B D1.3 तापसाचारमीदृशः; V1 तापसान्नमीदृशं (sic); D5 आपः संतोषमीदृशं (sic). —After 11, Ñ1 B4 ins. 2192*.

रामेणेङ्गुदिपिण्याकं पितुर्दत्तं समीक्ष्य मे ।
कथं दुःखेन हृदयं न स्फोटति सहस्रधा ॥ १२
एवमार्ता सपत्न्यस्ता जग्मुराश्वास्य तां तदा ।
ददृशुश्चाश्रमे रामं स्वर्गाच्च्युतमिवामरम् ॥ १३
सर्वभोगैः परित्यक्तं रामं संप्रेक्ष्य मातरः ।
आर्ता मुमुचुरश्रूणि सस्वरं शोककर्शिताः ॥ १४
तासां रामः समुत्थाय जग्राह चरणाञ्शुभान् ।
मातॄणां मनुजव्याघ्रः सर्वासां सत्यसंगरः ॥ १५
ताः पाणिभिः सुखस्पर्शैर्मृद्वङ्गुलितलैः शुभैः ।
प्रममार्जू रजः पृष्ठाद्रामस्यायतलोचनाः ॥ १६
सौमित्रिरपि ताः सर्वा मातॄः संप्रेक्ष्य दुःखितः ।
अभ्यवादयतासक्तं शनै रामादनन्तरम् ॥ १७

G. 2. 112. 21
B. 2. 104. 20
L. 2. 117. 22

12 D4.5.7 om. 12 (cf. v.l. 11). Ñ1 B4 om. 12ᶜ–13ᵇ. —ᵃ) Ś1 Ñ2 B1.2 D1–3.6 M2 रामेणेंगुद- (D1.2 °णांगुदि-); B2 बदरेंगुद- (for रामेणेङ्गुदि-). —ᵇ) B2 पितृ-. Ś1 Ñ2 Dg2 D2 वै; B1 तत्; B3 च; D1–3 हि (for मे). V1 समीक्षमि (sic); B2 समीक्ष्ये; T2 समीक्ष्यते; G2 (after corr. as in text) समीक्ष्यसे. —ᶜ) Ś1 Ñ2 V1 B2.3 D1–3.6 ममेदं; B1 मामात्म- (for दुःखेन). —ᵈ) Ś1 D6 विदीर्येत; Ñ2 B3 G1 न दीर्येत; V1 D1 न दीर्यति; B1 न विदीर्ये; B2 न विदीर्णे; D2 न दीनीये (sic); D3 दीर्यते न (for न स्फोटति). —After 12, Ś1 V1 B2 D (D4.5.7 after 11ᵃᵇ) S ins.:

2191* श्रुतिस्तु खल्वियं सत्या लौकिकी प्रतिभाति मा ।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ।

[ Before l. 1, Dm1 ins. राम. D4.5.7 om. l. 1 (cf. v.l. 11). —(l. 1) Ś1 B2 D2.6 च (for तु). Ś1 V1 B2 D1–3.6 शुभेयं (for लौकिकी). Ś1 V1 B2 Dg1 Dt1 D1–3 मे, Dd1 Dm1 मां (for मा). —(l. 2) = 2. 95. 31ᶜᵈ. Prior half hypm. D6 M2 यद्; D7 अन्न-. Ś1 V1 B2 D1–3.6 हि स्यात्; D4.7 भुंक्ते; D5 [च]भवत्; M4 भुंक्ते (for भवति). Dg1 भवत्. D2 पितृ- (for तद). Dg1 देवता.]

—After 12, Ñ2 B1.3 ins. 2192*.

13 Ñ B1.2.3 om. 13ᵃᵇ (for Ñ1 B4 cf. v.l. 12). —ᵃ) Ś1 B2 D2.6 M2 आर्ता; V1 मात्रा; D1 T1.2 G2 आर्ताः; D4.7 आर्ते (for आर्ता). Ś1 V1 B2 D1.3.6 सपत्नीभिर्; D2.3 रुदंती तां; D4.7 बद्धेयस्ता; T2 सपत्न्यस्ताः; G1.3 M1 सपत्न्यस्तु. —ᵇ) D2 दुःखिताः (for तां तदा). Ś1 D6 तामितश्वासिता तदा; V1 B2 D1.3 चैनामाश्वासिता तदा; D4.7 जग्मुरामस्य (sic) दुःखिताः. —After 13ᵃᵇ, Ś1 V1 B2 D1–3.6 ins., while Ñ1 B4 (owing to om.) ins. after 11 and Ñ2 B1.3 ins. after 12:

2192* सा जगामाश्रमपदं कौसल्या यत्र राघवः ।
तत्रतास्त्वरितं गत्वा सर्वा नृपतियोषितः ।

[ Before l. 1, D2 wrongly ins. माश्वासिता तदा (cf. 13ᵇ V1 var.). —(l. 1) B1 D3 माजगाम (for सा ज°). —(l. 2) Ñ V1 B D1–3 तास्तु (for तत्रता°). D6 त्वरितं (for °तं). B1 सर्वास्ता नृपयोषितः (for the post. half).]

—D2 om. 13ᶜ–14. —ᶜ) Ś1 Ñ V1 B1.2.4 D1.6 अपश्यन्नाश्रमे (for ददृशुश्चा°). B2 अपश्यन्नाश्रमपदे. —ᵈ) Ñ V1 B2.4 Dg1 Dt1 T1.2 स्वर्गाच्च्युतम्; D1 स्वर्गे च्युतम्; D2 स्वर्गभ्रष्टम्; D4.5.7 स्वर्गाद्धृतम्; G1 स्वर्गागतम्. D2 [अ]दरं (for [अ]मरम्).

14 D2 om. 14 (cf. v.l. 13). —ᵃᵇ) Ś1 D6 संभोगैः सं-; Ñ1 तनुभोगैः; Ñ2 V1 B Dg1 Dt1 D1.3.4.7 T2 M2.4 तं भोगैः सं- (Dt1 T2 स); D5 भोगैस्तं सं- (for सर्वभोगैः). B1 illeg. for त्यक्तं रामं. Ś1 V1 D1.6 दृष्ट्वा; Ñ1 B प्रेक्ष्यैव; D7 संप्रेषे (sic) (for संप्रेक्ष्य). M2 om. मातरः. —ᶜ) V1 D1 हार्दान् (for आर्ता). M2 मुमुचुरश्रु संप्रेक्ष्य (sic). —ᵈ) Ś1 सस्वराः; B1 भर्तारं; B4 Dm1 सुस्वरं; D1 M4 सस्वनं; D2 सर्वास्ताः; D6 सुस्वराः; M3 स्वरं (for सस्वरं). Ñ B D4.5.7 -लालसाः (for -कर्शिताः).

15 ᵃ) G2 स तान् (for तासां). D2 om. from शुभौ in ᵇ (see var.) up to -तलैः in 16ᵇ. —ᵇ) V1 D1.3 चरणौ शुभौ-; Dt1 Dd1 Dm1 चरणांबुजान् (for °णाञ्शुभान्). —ᶜ) Ś1 Ñ V1 B D1.3.4–7 पुरुष-; T2 मनुज- (for मनुज-). —ᵈ) Ś1 Ñ V1 B D1.6 मनुपूर्वशः; T2 भविसेवतः (for सत्यसंगरः).

16 D2 om. up to -तलैः in 16ᵇ (cf. v.l. 15). —ᵃ) D4.5.7 पाणिभिस्ता (by transp.); T2 G1 M2 तं पा° (for ताः पाणिभिः). Ś1 Ñ V1 B D1.6 पाणिभिः सुखसंस्पर्शैर्. —ᵇ) T1 -दलैः (for -तलैः). —ᶜ) D2.6 प्र- (D6 प्रा)मार्जंत; D4 प्र(before corr. प्रा)मार्जंत; D7 प्रममार्जः; G2 परिमार्जु (sic) (for प्रममार्जू). G1 तनुं (for रजः). D4.5.7 दृष्ट्वा; G1 प्रेक्षां (for पृष्ठाद्). M4 रजः प्रमसृजुः पृष्ठाद्. —ᵈ) D4.5.7 [अ]सित- (for [आ]यत-). —For 16ᶜᵈ, Ś1 Ñ V1 B D1.3.6 subst., while D2 ins. after 16:

2193* मूर्धन्याघ्राय ता रामं रुरुदुः पार्थिवस्त्रियः ।

[ V1 मूर्ध्नुपाघ्राय (for मूर्धन्याघ्राय). V1 D1–3 रामं ता (by transp.); B1 ते रामं (for ता रामं). V1 D2 सस्वजुः; D1.3 सस्वजुः (for रुरुदुः).]

17 ᵃ) D4.5 अथ (for अपि). D4.5 G2 सर्वास्ता (by transp.); D6 ताः सर्व. D7 अभ्यसर्वास्ता (sic). —ᵇ) D2 उपसंगृह्य (for मातॄः संप्रेक्ष्य). Dm1 T2 दुःखिताः (for °तः). Ś1 Ñ V1 B D1–3.6 ता मातॄः (V1 D1–3 मातरः) शोककर्शिताः; D4.7 मातॄः सुदुःखिताः. —ᶜ) V1 Dt1 Dd1 D1–3.5 T1 G M1–3 अभ्यवादयद् (for अभ्यवादयत). Ś1 Ñ B D6 अग्रे; V1 D1–3.7 अव्यग्रः; Dm1 G2 M1.4 आसक्तः (for [आ]सक्तं).

G. 2. 112. 22 / B. 2. 104. 21 / L. 2. 117. 24

यथा रामे तथा तस्मिन्सर्वा ववृतिरे स्त्रियः ।
वृत्तिं दशरथाज्जाते लक्ष्मणे शुभलक्षणे ॥ १८
सीतापि चरणांस्तासामुपसंगृह्य दुःखिता ।
श्वश्रूणामश्रुपूर्णाक्षी सा बभूवाग्रतः स्थिता ॥ १९
तां परिष्वज्य दुःखार्ता माता दुहितरं यथा ।
वनवासकृशां दीनां कौसल्या वाक्यमब्रवीत् ॥ २०
विदेहराजस्य सुता स्नुषा दशरथस्य च ।
रामपत्नी कथं दुःखं संप्राप्ता निर्जने वने ॥ २१
पद्ममातपसंतप्तं परिक्लिष्टमिवोत्पलम् ।
काञ्चनं रजसा ध्वस्तं क्लिष्टं चन्द्रमिवाम्बुदैः ॥ २२
मुखं ते प्रेक्ष्य मां शोको दहत्यग्निरिवाश्रयम् ।
भृशं मनसि वैदेहि व्यसनारणिसंभवः ॥ २३
ब्रुवन्त्यामेवमार्तायां जनन्यां भरताग्रजः ।
पादावासाद्य जग्राह वसिष्ठस्य स राघवः ॥ २४
पुरोहितस्याग्निसमस्य तस्य वै
बृहस्पतेरिन्द्र इवामराधिपः ।
प्रगृह्य पादौ सुसमृद्धतेजसः
सहैव तेनोपविवेश राघवः ॥ २५

---

—d) Ś1 Ñ B D6 दीनो; V1 प्रस्फो (sic); D1-3 मह्यो D4 स वै; D7 सर्वै; M4 ततो (for वने). —After 17, Ś1 Ñ V1 B D1-3.6 ins. :

2194* आशीर्वादैश्च रामस्य लक्ष्मणस्य तथैव च ।
देशकालानुरूपेण मातृभिः संप्रयोजितैः ।

[ (L. 1) Ñ2 B4 D2 आशीर्वादा( D3 °द )श्च; V1 D1.2 आशीर्वादांश्च. D3 om. second च (subm.). —(L. 2) Ñ B2-4 D2 -[अ]नुरूपाश्च; V1 D1.2.7 -[अ]नुरूपांश्च; D6 -[अ]नुरूपैश्च. Ñ B2.3 (partially reads in marg.).4 वेनुरूपांश्च मातृषु; V1 D1-3.7 सदृशांश्चापि मातृषु; B1 अनुरूपं च मातृषु (for the post. half). ];

—Thereafter Ñ2 cont. :

2195* तैः शुभैं सर्दृपामासुः (sic) सर्वा दशरथस्त्रियः ।

18 a) Ś1 तथा (for यथा). —b) B3 सर्वान् (for सर्वा). B1.2 शुश्रुविरे; D6 स्वत्रुतिरे (sic) (for ववृतिरे). V1 D1.2 सर्वास्ता दद्रु( V1 °द्र [sic] )रंगनाः; D3 सर्वास्ता स्वुरंगनाः (sic). —V1 D1-3 om. 18cd. —c) B1.4 D6 वृत्तं; B2 वृत्ताद् (for वृत्तिं). D4.7 जाते. —d) D4.7 लक्ष्मणः शुभलक्षणः.

19 a) Ś1 Ñ V1 B D1-3.6 कदली (for चरणांस्). V1 D1-3 पादाव् (for तासाम्). —b) Dd1 Dm1 उपगृह्य सु-; T3 उपगृह्य (subm.); G3 M1 उपगृह्य सु- (for °संगृह्य). Ś1 Ñ B D6 पादाद्( Ñ1 °दे; B1.2.4 पदं ) स्पृष्ट्वा सुदुःखिता. —d) Dg1 Dt1 Dd1 Dm1 T2 G1 M2 सं- (for सा).

20 a) D3 सं- (for तां). Ś1 Ñ V1 B D1.3.6 M4 कौसल्या; Dt1 Dd1 Dm1 T3 दुःखार्ता; D2 दुःखार्त-; M3 om. (for दुःखार्ता). —b) D4.6.7 मातां (for माता). D2 मा ... वर्द तथा. —c) Ś1 Ñ Dt1 T1.2 Ct -कृतां (for -कृशां). V1 देवीम् (for दीनां). D4.6.7 कौसल्या वनवासातांम्. —d) Ś1 Ñ V1 B D1-3 M4 इदं वचनमब्रवीत्.

21 D1 om. 21ab. —a) D3 वैदेह- (for वि°). Ñ2 -राजतनया; Dd1 -राजन्यसुता (for -राजस्य सुता). —b) D3 तु (for च). —c) Ñ B1.2.4 राजपुत्री; Dg1 राज° (for रामपत्नी). Ś1 Ñ B D6 दुर्गं (for दुःखं). —d) G3 सुप्राप्ता (for सं°). Dt1 G1.2 M3 विजने (for निर्जने). Ś1 Ñ B D6 M4 वने प्राप्तासि जानकि; V1 D2-4.7 संप्राप्ता निर्जने वने.

22 a) D3.4.6.7 -संप्राप्तं; G3 M1 -संपृक्तं (for -संतप्तं). —b) Ś1 Ñ2 B2 D6 M2 परिक्लिन्नम्; V1 D1.2 °म्लानम्; B3 म्लिन्नम्; Ck as in text; Ct °कृष्टम् (for °क्लिष्टम्). V1 D1.2 [इ]वोत्पलं (for [इ]वोत्पलम्). —c) D6 सार्द्रं; D5 ध्वुस्तं (sic); M3 [इ]वास्तं; Ct as in text (for ध्वस्तं). —d) Ś1 Ñ B D1.3.6 क्लिष्टं; D2.4 क्लिष्ट-; T3 क्रुष्टं (sic) (for क्लिष्टं). Ś1 Ñ B D1.2.6 [अ]भ्रैः; T3 [अं]बुदं (for [अ]म्बुदैः). V1 क्लिष्टां चंद्रप्रभामिव; M4 परिक्लिष्टमिवांबुजं.

23 a) G3 दुःखं (for मुखं). D6 तत (for ते). V1 प्रेक्षते सीते; D1.2.4.6 प्रेक्ष्य मां( D7 मा; D6 तां ) सीते; D2.7 प्रेक्ष्य सीते मे( D7 मे सीते [by transp.] ); T3 M3 प्रेक्ष्य मा शोको; M4 प्रेक्ष्यमाणं मां. —b) V1 B2 D1-3.7 M2.4 Ck.tp [आ]शयं; B4 [आ]श्रमं; Cr.m.g as in text (for [आ]श्रयम्). —c) Ś1 Ñ1 B1 D6 तवेह; Ñ2 B1.2 त्वामिह; B3 तवेव (for मनसि). V1 D1-3.7 शोकानलोयं वैदेहि. —Dg1 reads 23d in marg. —d) V2 व्यसनारम-; G3 व्यसनारुणि-. —After 23, Ś1 Ñ B D6 ins. :

2196* दहत्यग्निर्मुखं कान्तं निस्तोयमिव पङ्कजम् ।
[ Ś1 Ñ B4 D6 [अ]ग्निमुखं. ]

24 a) V1 ब्रुवंत्याम्; B1.3 Dg1 D1-3.7 T2 G3 M2.4 ब्रुवत्याम् (for °न्त्याम्). V1 B1 D1.2 एव चार्तायां; B4 Dd1 एव चा( B4 व [sic] )र्तायां; G1 एव सीतां च (for एवमार्तायां). —b) D6 जनन्या. —c) D2 पादावासन्य; M4 °वभास्था (for °वासाद्य). V1 (which reads Sarga 98 after 96) missing from 24d up to 2. 98. 13 on a missing fol. —d) Ñ B1.2.4 [अ]थ; B2 [अ]पि; Dg1 T1.2 G1.3 च (for स). Ś1 D1.3.6 महात्मनः; D4.6.7 च बुद्धिमान.

25 V1 missing 25 (cf. v.l. 24). —a) Ś1 B3-4 D1.3-6 G1.2 तस्य; B1 राघवो; D6 रामः; T1 M4 वै तदा (for तस्य वै). —c) Ś1 Ñ B D6 M4 निपीड्य (for प्रगृह्य). G3

ततो जघन्यं सहितैः स मन्त्रिभिः
पुरप्रधानैश्च सहैव सैनिकैः ।
जनेन धर्मज्ञतमेन धर्मवा-
नुपोपविष्टो भरतस्तदाग्रजम् ॥ २६
उपोपविष्टस्तु तदा स वीर्यवां-
स्तपस्विवेषेण समीक्ष्य राघवम् ।
श्रिया ज्वलन्तं भरतः कृताञ्जलि-
र्यथा महेन्द्रः प्रयतः प्रजापतिम् ॥ २७

किमेष वाक्यं भरतोऽद्य राघवं
प्रणम्य सत्कृत्य च साधु वक्ष्यति ।
इतीव तस्यार्यजनस्य तत्त्वतो
बभूव कौतूहलमुत्तमं तदा ॥ २८
स राघवः सत्यधृतिश्च लक्ष्मणो
महानुभावो भरतश्च धार्मिकः ।
वृताः सुहृद्भिश्च विरेजुरध्वरे
यथा सदस्यैः सहितास्त्रयोऽग्नयः ॥ २९ G 2. 111. 33 B 2. 104. 32 L 2. 117. 33

इति श्रीरामायणे अयोध्याकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

M1 पाणौ (sic) (for पादौ). Ś1 B4 D6 स समि( D6 °वि )- द्ध-; Ñ1 स समृद्ध-; Ñ2 B3 G1 सुसमिद्ध- (for सुसमृद्ध-). D2.5 -तेजाः; G2 -तेजः (sic) (for -तेजसः).

26 V1 missing 26 (cf. v.l. 24). D2 om. 26–28. Ś1 D1 om. 26. —a) Dd1 Dm1 जघन्यैः; M3 Cr. जघन्यः; Cv.r.m.g.t as in text (for °न्यं). Ñ1 भरतश्च; Ñ2 B1.3 भरतोपि; B2 भरतः स; B4 भरतस्य; Dt1 सहितैः स्व-; Dd1 Dm1 सहितः सः; T2 सहितं सः; M3 सचिवैः स (for सहितैः स). Dg1 सैनिकैः (for मन्त्रिभिः). D2.4.5.7 ततो जघन्यं( D4.7 °घन्यः; D5 °घन्या ) सहि( D2.5 °ह )तैरमात्यैः. —Ñ2 om. 26b. —b) Ñ1 B2.4 बलप्रधानैश्च; B1 D5 पुरः प्रधानैश्च; D4 T2 पुरं प्र° (for पुरप्रधानैश्च). Dg1 Dt1 Dd1 Dm1 T3 M2.3 तथैव (for सहैव). M3 सुरप्रधानैरपि च द्विजातिभिः. —D4.7 om. 26cd. —cd) Ñ2 B D2.6 M3 गुरुणा; D5 तेनैव (for जनेन). Ñ B D2.5.6 M3 धर्मविन्महोपविष्टः (for °वानुपोपविष्टो). Dg1 G1.2 M2 तथा (for तदा). Ñ B D6 समुपेत्य राघवं; D2.5 स स( D5 °स )मेत्य राघवः (for भरतस्तदाग्रजम्).

27 V1 missing 27 (cf. v.l. 24). D2 om. 27 (cf. v.l. 26). —a) Ś1 वने प्रविष्टस्तु; B1.2 D1.4.7 °विष्टं तु; B3.4 तदोपतस्थे तु; Dm1 °विष्टस्य; Cv.m.g.k.t as in text (for उपोपविष्टस्तु). Ś1 Ñ1 B1.2 D6 तथैव वीरः; B3.4 तथैव धीतिमांश्च; Dg1 G M1.2.4 तथा स वीर्य°; Dt1 तदानिवी°; D1.4.7 सहैव वीर्य°; T2 तदा सुवी° (for तदा स वीर्यवांस्). Ñ2 तदोपतस्थे सहितैरमात्यैस्; D2.5 उपोपविष्टः सहसैव( D5 सुसहैव ) वीर्यवांस्. —b) Ś1 D6 ततः स धर्मेण (for तपस्विवेषेण). Ś1 Ñ B D6 सहैव; D4.7 च वीक्ष्य (for समीक्ष्य). —c) D6 भरतं (sic) (for °तः). —d) Dt1 स्वयतः (for प्रयतः). D4.7 पितामहं (for प्रजापतिम्).

28 V1 missing 28 (cf. v.l. 24). D2 om. 28 (cf. v.l. 26). —a) Ś1 D2.5.6 [ऽ]थ (for ऽद्य). —c) D6 ततीव (for इ°). Ś1 D6 [ अ ]थ जनस्य; B1 [ अ ]तु जनस्य; G2 [ अ ]थ जनस्य (for [ आ ]र्य°). Dg1 तत्त्वतो; Dd1 Dm1 D1 सर्वतो; D4.7 तत्त्वरो (for तत्त्वतो). —d) G1 उत्तरं; M3 मंगलं (for उत्तमं). D5 ततः (for तदा).

29 V1 missing 29 (cf. v.l. 24). —a) D6 सत्यधृतिः (for सत्य°). D4.7 G2 स (for च). —b) D5 भरतस्य (sic) (for °तश्च). Ś1 Ñ1 B D2.4–7 धर्मवित्; Ñ2 तत्त्ववित् (for धार्मिकः). —c) Ś1 Ñ1 D1–4.6.7 प्रविरेजुरोजसा; Ñ2 B प्रति- ( B3 परि; B4 °वि )रेजुरंजसा; Dt1 G1 तु( Dt1 च ) विरेजिरेऽध्वरे; Dm1 G2 M तु विरेजुरध्वरे; D5 प्रविबभ्रुरोजसा (for च विरेजुरध्वरे). —d) G2 यदा (for यथा). Ś1 B2 (m. also महर्षिभिस्) D1.2.4–7 ज्वलिताश्; Ñ B1.2.4 M3 महर्षिभिः; D1 मिलिताश् (for सहिताश्).

Colophon. V1 missing (cf. v.l. 24). —*Sarga name*: Ś1 Ñ B मातुलसमागमः; D1.2 भरतसमागमः; D3 भरतपर्वणि वसिष्ठदर्शनः; D4.5 वसिष्ठदर्शनं( D5 °नः ); D6 मातुसंगमः; D7 वसिष्ठसंदर्शनः. —*Sarga no.* (figures, words or both): Ś1 Ñ1 B1 D2.6 om.; Ñ2 113; B2 98; B3 D5 111; B4 97; Dg1 Dt1 Dd1 Dm1 T2 G2 M2.3 104; D1 164; D3 M4 112; D4 108; D7 110; T1.2 G1.2 M1 103. —After colophon, Dm1 concludes with रामः; T2 with श्रीरामचन्द्राय नमः; G with श्रीरामाय नमः. —After the colophon of Sarga 96, T2 repeats Sarga 97 (cf. v.l. 2.94 colophon).

# ९७

G. 2. 110. 0
B. 2. 101. 1
L. 2. 113. 1

तं तु रामः समाश्वास्य भ्रातरं गुरुवत्सलम् ।
लक्ष्मणेन सह भ्रात्रा प्रष्टुं समुपचक्रमे ॥ १
किमेतदिच्छेयमहं श्रोतुं प्रव्याहृतं त्वया ।
यस्मात्त्वमागतो देशमिमं चीरजटाजिनी ॥ २
यन्निमित्तमिमं देशं कृष्णाजिनजटाधरः ।
हित्वा राज्यं प्रविष्टस्त्वं तत्सर्वं वक्तुमर्हसि ॥ ३
इत्युक्तः केकयीपुत्रः काकुत्स्थेन महात्मना ।
प्रगृह्य बलवद्भूयः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४
आर्यं तातः परित्यज्य कृत्वा कर्म सुदुष्करम् ।
गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः ॥ ५
स्त्रिया नियुक्तः कैकेय्या मम मात्रा परंतप ।
चकार सुमहत्पापमिदमात्मयशोहरम् ॥ ६
सा राज्यफलमप्राप्य विधवा शोककर्शिता ।
पतिष्यति महाघोरे निरये जननी मम ॥ ७

## 97

☞ D2.4.5.7 missing for Sarga 97. Ś1 Ñ V1 B Dg1 Dt1 Dd1 Dm1 D1.2.6 T2(repeating Sarga 97 here).3 G2 M2–4 Cv.m.k.t read Sarga 97 after Sarga 94. Dm1 begins with ॐ; M1 with श्रीरामाय नमः। शुभमस्तु; M2 with श्रीरामाय नमः.

1 G(ed.) om. 1–4. —a) Ñ2 B4(before corr.) तं च; Dm1 एवं; Cm as in text (for तं तु). T1.2(second time) M3 Cr.m.g.k.t समाश्वास्य; Cv.rp. mp. gp. समाश्वास्य (as in text). —b) Ś1 Ñ V1 B Dd1 Dm1 D1.2.6 भरतं (for भ्रातरं). —c) T2(second time) स∗ ∗त्रा (moth-eaten). —d) T2 इष्टुं (sic). —For 1cd, Ś1 Ñ V1 B D1.2.6 subst.:

2197* उत्थाप्य मूर्ध्न्याघ्राय पादयोः पतितं तदा ।

[V1 D1 उत्थाय. Ś1 D6 मूर्ध्नि चाघ्राय; Ñ1 V1 B4(before corr. as above).4 D1 मूर्ध्न्युपाघ्राय.]

—B2 cont.:

2198* उवाच दीनया वाचा बाष्पाकुलितलोचनः ।

2 G(ed.) om. 2 (cf. v.l. 1). —ab) V1 एतदिच्छाम्यहं वीर; B2 किमेतमेतदिच्छेयं; T2 (second time) किमेतदिच्छेयमहं; T3 किमिच्छेयमहं श्रोतुं (for a). T2 वचः (for श्रोतुं). Ś1 Ñ V1 B D6 य(D6 त)द्व्याहृतं (for प्रव्या°). T2 (first time) यदिच्छेयमहं श्रोतुं प्राप्य वाप्यहृतं त्वया. —c) Ś1 Ñ V1 B D1.2.6 कस्मात् (for यस्मात्). —d) Ś1 Ñ1 Dg1 D6 T2 G1.2 M4 चीरजटाधरः (Dg1° रं); Ñ2 V1 Dm1 चीरजटाजिनं (Dm1 °नी); B4 °टाभृतः T2 (first time) Cm °टाजिनः; Cr.g.k.t °जिनी (as in text).

3 G(ed.) om. 3 (cf. v.l. 1). Ś1 om. (hapl.) 3ab. M2 reads 3ab *inf. lin. sec. m.* —a) B1 सन्निमित्तम्; Dg1 T2(first time) Cg किंनिमित्तम्; Cr.t यन्निमित्तम् (as in text). V1 सुसंक्लेशं; D1.2 इमं क्लेशं T2(first time) M4 इदं देशं (for इमं देशं). —b) Ñ2 B2 (m. also as in text) इह चीर- (for कृष्णाजिन-). G2 -जटाधनः. —c) T2 (first time) प्रहृष्टस्त्वं; G2 प्रविष्टोसि. —d) D5 व्यक्तुम् (sic); T2 (first time) तत्तुम् (sic) (for वक्तुम्).]

4 G(ed.) om. 4 (cf. v.l. 1). —a) V1 B2.3 Dg1 Dd1 Dm1 D5 T2(both times).2 G M Cr.m.g कैक(V1 Dg1 Cr कैके; B3 केके)यीपुत्रः. —c) Ś1 D6 प्रमृज्य बाष्पं बाहुभ्यां; Ñ V1 B D1.2 प्रगृह्य बाहू(Ñ B1 °हु-; D1.2 बाष्पं) बलवान्.

5 Before 5, G(ed.) ins. l. 1–2 of 2164*. —a) Ś1 D6 आर्यो राजा; Ñ B आर्यं राजा(B1 °जं); V1 Dg1 Dt1 Dd1 T2 G1.2 M3 Ck.t आर्यं तातः; Cv.r.g.tp as in text (for °तातः); D5 आर्यस्तत: परित्याग. —b) V1 श्रुत्वा (for कृत्वा). V1 Dg1 धर्मं; Cr.m.g.t as in text (for कर्मं). —c) Ś1 ततः स्वर्गं; B1 ∗∗ र्गं (illeg.); D5 ∗∗ स्वर्गं. Ñ2 B1 महाराजः (for °बाहुः). —d) D1.2 -[अ]तिपीडितः. —After 5, G(ed.) ins. l. 3–10 of 2164*.

6 a) Dg1 निमित्तः (sic); Dd1 [अ]तियुक्तः; Ct as in text (for नियुक्तः). —b) G M1.4 परंतपः (for °प). T2 (first time) मन्मात्रा परमंतप (sic). —For 6ab, Ś1 Ñ V1 B D1.2.6 G(ed.) subst.:

2199* दुष्टा बीजबुद्धिमास्थाय कैकेयी राज्यकामिनी ।

[G(ed.) ins. स्त्रिया उवाच within brackets. Ñ दुष्टा; V1 B2 D1.2 दुष्ट-; B4 पुत्र (for दुष्टा). V1 राज्यकामिका; D1.2 °कामुका(D1 [before corr.] °मया).]

—c) Ñ कृ; Dt1 G2 Ck.t सा; Cg as in text (for सु-). —d) Ś1 D6 इदं मम; Ñ1 इदं सदा; Ñ2 B4 इदमस्या (sic); V1 इदमंबा; B1–3 इदमेवा; D2 इदमाय- (for इदमात्म-). G2 -यशोमनं (sic).

7 a) G1 राज्यं (for राज्य-). —b) Ñ1 राज्य- (for शोक-). Ś1 Ñ2 V1 B Dg1 D6 -कर्षिता. —c) B2 (m. after corr. as in text) पतयति सा; M2 पति स्यक्त्वा (for पतिष्यति). Ñ2 B M4 महाघोरे. —d) Ñ B निरये; V1 Dt1 Dd1 Dm1 D1.2 नरके; M4 नरकं. —After 7, B2 ins.:

2200* ममापि च गतिर्नास्ति मातृदोषेण सुव्रत ।

तस्य मे दासभूतस्य प्रसादं कर्तुमर्हसि ।
अभिषिञ्चस्व चाद्यैव राज्येन मघवानिव ॥ ८
इमाः प्रकृतयः सर्वा विधवा मातरश्च याः ।
त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि ॥ ९
तदानुपूर्व्या युक्तं च युक्तं चात्मनि मानद ।
राज्यं प्राप्नुहि धर्मेण सकामान्सुहृदः कुरु ॥ १०
भवत्वविधवा भूमिः समग्रा पतिना त्वया ।
शशिना विमलेनेव शारदी रजनी यथा ॥ ११
एभिश्च सचिवैः सार्धं शिरसा याचितो मया ।
भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि ॥ १२
तदिदं शाश्वतं पित्र्यं सर्वं सचिवमण्डलम् ।
पूजितं पुरुषव्याघ्र नातिक्रमितुमर्हसि ॥ १३
एवमुक्त्वा महाबाहुः सबाष्पः केकयीसुतः ।
रामस्य शिरसा पादौ जग्राह भरतः पुनः ॥ १४
तं मत्तमिव मातंगं निःश्वसन्तं पुनः पुनः ।
भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ॥ १५
कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ।
राज्यहेतोः कथं पापमाचरेत्त्वद्विधो जनः ॥ १६
न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन ।
न चापि जननीं बाल्यात्त्वं विगर्हितुमर्हसि ॥ १७

G. 2. 110. 16
B. 2. 101. 17
L. 2. 115. 17

---

8 a) M3 तस्य दासस्य भूतस्य. —b) Ñ1 B2 (m.).4 संप्रसत्तुं (Ñ1 °त्वं [sic]; B2 [orig. प्रहर्तुं न]) त्वम्; Ñ2 B3 संप्रसाद्धुं त्वम्; V1 D1.3 त्वं प्रसी(V1 प्रासा)दितुम्; M4 (before corr.) त्वं प्रसत्तु(inf. lin. sec. m. °त्तुं)मिह (for प्रसादं कर्तुम्). —c) Ś1 Ñ1 V1 B1.2.4 D6 M4 अभिषिच्यस्व (V1 °ञ्चि; B4 °स) चा(Ñ1 V1 वा)नेन (B1 om. चानेन); Ñ2 B3 अभिषिच्यस्व(Ñ2 °ञ्चु) राज्येन; D1.3 अभिषिञ्च(D1 °षिच्य) स्वमात्मानं. —d) Ñ2 B3 नाकेन; T2 (second time) राज्येस्मिन् (for राज्येन).

9 a) Ñ1 विविधा (for विधवा). Ś1 Ñ V1 B D6 मे; D1.3 M3 ते (for याः).

10 a) Ñ1 त्वाम्; Ñ2 B3 Ck.t त्वम्; V1 B4 D1.3 त्वया; B1.2 M3 तव; Dt1 T2 (second time) तथा; Cr as in text (for तद्). Dm1 T1.2(second time).3 G1 Cr आनुपूर्व्याद्; T2 [first time] G3 आनुपूर्व्याद्. Ñ1 B1.4 Dt1 Ck.t युक्त्या; Ñ2 B3 काकुत्स्थ; V1 D1.3 यु(D1 पू)र्व्यंतो; T3 युक्तं च; Cv.r.m.g.t as in text (for युक्तं च). Ś1 D6 त्व(Ś1 त्वा)मानुपूर्वतो युक्तं. —b) Ś1 Ñ B1.2.4 D6 युक्तं कामेन; V1 युक्तकामेन; B2 पुत्रकामेन; D1.3 युक्त(D3 °यु [sic])मानेन; G1.2 M1.3 युक्तमात्मनि. M3 मा इदः (for मानद). —c) T2 (second time) प्राप्य हि (for प्राप्नुहि). —d) G1.2 सपाणान् (for सकामान्). T2 (second time) सुहृदं.

11 b) V1 समया (for समग्रा). Ś1 Ñ B D6 त्वया पत्या समन्विता. —c) V1 G M1.2 [ए]व; B2.3 Ct.p [इ]ह (for [इ]व). —d) Dm1 शारदा. V1 शारदीव यथा निशा.

12 a) Ś1 V1 D6 भ्रातृभिः (for एभिश्च). Ś1 D6 सर्वैः (for सार्धं). —b) G1 याचतो (sic). V1 यथा (for मया). —c) Ś1 D6 प्रियस्य (for शिष्यस्य). V1 D1.3 दासस्य शिष्यस्य (by transp.).

13 T2 om. (hapl.) 13 at the first occurrence. —ab) Ś1 Ñ B D6 सर्वं पित्र्यं (Ñ1 B °त्र्या) (by transp.); D1.3 पित्रा सर्वं (for पित्र्यं सर्वं). T1.2(second time).3 Cg प्रकृतिमंडलं; Ck.t सचिवमंडलं (as in text). —c) Ś1 Ñ V1 B D1.2.3 M3 मनुजव्याघ्र. —d) Ś1 D6 [अ]वमानितुम्; Dm1 T3 M1 [अ]तिक्रामितुम्; Cg.t °क्रमितुम् (as in text).

14 a) Dg1 उक्तो; Dt1 Dd1 Dm1 T2(second time) उक्त्वा. V1 महाप्राज्ञः (for °बाहुः). —b) Ś1 D6 सत्त्वाढ्यः; B1 M3 सबाष्पं (for सबाष्पः). —c) Ś1 Dg1 D6 M3 transp. शिरसा and पादौ. —d) V1 जगृहे; D1.3 जगाम. T1.2(second time).3 विविशत् (for भरतः). Ś1 Ñ B D6 तदा; V1 D1.3 स्वयं (for पुनः).

15 a) Ś1 Ñ B D6 आर्तम् (for मत्तम्). —b) B4 Dt1 Dd1 Dm1 T1.2(both times).3 G M Ck निश्वसंतं; Ct निःश्वसंतं (as in text). Ś1 Ñ B D6 मुहुर्मुहुः (for पुनः पुनः). —Ś1 D6 transp. 15[cd] and 16[ab]. —cd) Ñ1 B2.3 भरतं भ्रातरं (by transp.). Dg1 reads रामः in marg. Ś1 D6 रामोप्यथाब्रवीद्वाक्यं भरतं केकयीसुतं.

16 Ś1 D6 transp. 15[cd] and 16[ab]. —a) B2 कुलीन-. V1 D1.3 शील-; B2(m.; orig. as in text) T1 सत्य- (for सत्त्व-). —c) D3 illeg. for राज्यहे. B1 पापाम् (for पापम्). —d) Ś1 Ñ V1 B Dt1 Dd1 Dm1 D1.2.3 G1 M3 मद्विधो जनः (B4 [before corr.] °धोपमः); D3 मद्विधो — (illeg.); Cv त्वादृशो जनः.

17 a) D3 न — (illeg.); G2 दोषं न (by transp.). —c) B4 बाला (for बाल्यात्). V1 जननी बाल्या. —d) V1 तद् (for त्वं). D3 —र्हितुम्. —After 17, V1 Dg1 Dt1 Dd1 Dm1 D1.3 T1.2(both times).3 G M ins.; while B2 ins. after 22:

2201* कामकारो महाप्राज्ञ गुरूणां सर्वदानघ ।
उपपन्नेषु दारेषु पुत्रेषु च विधीयते ।
वयमस्य यथा लोके संख्याताः सौम्य साधुभिः ।
भार्याः पुत्राश्च शिष्याश्च त्वमपि ज्ञातुमर्हसि ।
वने वा चीरवसनं सौम्य कृष्णाजिनाम्बरम् । [5]
राज्ये वापि महाराजो मां वासयितुमीश्वरः ।

G. 2. 110. 17
B. 2. 101. 21
L. 2. 115. 18

यावत्पितरि धर्मज्ञे गौरवं लोकसत्कृते ।
तावद्धर्मभृतां श्रेष्ठ जनन्यामपि गौरवम् ॥ १८
एताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव ।
मातापितृभ्यामुक्तोऽहं कथमन्यत्समाचरे ॥ १९
त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम् ।
वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ २०
एवं कृत्वा महाराजो विभागं लोकसंनिधौ ।
व्यादिश्य च महातेजा दिवं दशरथो गतः ॥ २१
स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव ।
पित्रा दत्तं यथाभागमुपभोक्तुं त्वमर्हसि ॥ २२
चतुर्दश समाः सौम्य दण्डकारण्यमाश्रितः ।
उपभोक्ष्ये त्वहं दत्तं भागं पित्रा महात्मना ॥ २३
यदब्रवीन्मां नरलोकसत्कृतः
पिता महात्मा विबुधाधिपोपमः ।
तदेव मन्ये परमात्मनो हितं
न सर्वलोकेश्वरभावमव्ययम् ॥ २४

इति श्रीरामायणे अयोध्याकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

---

[ (l. 1) T2 (first time) गुरूनः (for गुरूनां). V1 B2 D1.3 सर्वथा सता; T2 G1.2 M1.2.4 सर्वथा(T2 °तो)नघ. —(l. 2) B2 तत्त्वेषु न. Dt1 repeats द्वारेषु. G1.2 विधीयतां; Cm.k.t विधीयते (as above). —(l. 3) V1 D1.3 न(V2 स) स्ववशा; B2 अस्ववशा; M2 अविनत्यथा (for अन्य वशा). V1 सात्वाता (sic) (for संख्याताः). V1 B2 D1.3 लोक- (for सौम्य). —(l. 4) V1 B2 D1.3 भार्या पुत्रश्च शिष्यश्च (for the prior half). B2 Dg1 त्वमनुज्ञातुम्; Cg.k.t त्वमपि ज्ञातुम् (as above). —(l. 5) D1.3 -वसनः (for °न). V1 वनेवासेन वसनं (for the prior half). V1 B2 D1.3 कृष्णाजिनजटाधरं(D1.3 °रः) (for the post. half). —(l. 6) B2 राज्यं (for राज्ये). V1 D1.3 G2 M2 महावाते; B2 °राज्ये (for °राज्ये). Dm1 मा (for मां). V1 B2 निवांतमितुमर्हसि; D1.3 निवर्से पितुराज्ञया (for the post. half). ]

18 a) Ñ1 B1 Dg1 Dt1 Dd1 Dm1 D1.3 T2(first time).3 G2.3 M1.2.4 धर्मज्ञ(Dm1 °ज्ञः). —b) Dm1 गौरवे. Ś1 Ñ V1 B D1.2.4 मम भागद(Ñ2 भाइन [meta]); T1.2 (second time).3 M4 लोकसत्कृतं. —c) Dt1 Dd1 Dm1 धर्मेकृतां(Dd1 °ते) (for °भृतां). Ś1 Ñ V1 B D1.3.4 तावदेव जनन्यां मे. —d) Ś1 Ñ V1 B D1.3.4 कैकेय्याम् (for जनन्याम्). G2 चापि (for अपि).

19 a) Ś1 D4 स ह्यभ्यां; Ñ V1 B D1.3 M4 स ताभ्यां (for एताभ्यां). —b) M3 वने (for वनं). —c) B2 (m. also) मातृपितृभ्याम्. Ś1 Ñ V1 B2.3 D1.3.4 उक्तः सन्; B1.4 मुक्तः सन्; T2 (first time) मुक्तोऽहं; M4 मुक्तस्तु (for उक्तोऽहं). —B2 reads d twice. —d) T2 (first time) अन्यं (for अन्यत्). T2 (first time) G2 समाचरेत्; Cr.g.k.t समाचरे (as in text). Ś1 Ñ B1.2(second occurrence sec. m.).3.4 D4 कथं कुर्यामतोऽन्यथा; V1 D1.3 M4 कथं कुर्यां तदन्यथा.

20 b) V1 D1.3 कर्तव्यं (for प्राप्तव्यं).

21 a) B2 Dg1 Dt1 D2 T2(first time).3 M2.3 Ct उक्त्वा (for कृत्वा). Ś1 Ñ B1.2.4 D1.3.4 M3 महाभागो; V1 B4 °बाहो; T2 °बाहुर् (for °राजो). —c) G2 M1 व्यपदिश्य (for व्यादिश्य च). Ś1 Ñ V1 B D1.3.4 M4 [तु]थ(D1.3 [तु]त्रे) धर्मात्मा; Dt1 महाराजो; Dd1 Dm1 M2 महाभागो (for महातेजा).

22 a) Ś1 Ñ V1 B D1.3.4 M4 चेत् (for च). D2 प्रणामं (meta). Ś1 Ñ B D4 M4 राजें(B4 °ज्ये)ष्ठो (for धर्मात्मा). —b) B1 Dd1 राजः; T2 पिता (for राजा). D2 लोके (for लोक-). B1 T2(first time) G1.2 तदा; M4 तथा (for तव). —c) B1 महाभागम्; T2 वदा भागम् (for यथाभागम्). —After 22, B2 ins. 2201*.

23 Dt1 om. 23. B(ed.) reads 23 within brackets. —D2 om. from इदं in 23c up to कि in किंवताम् in 2.95.6d (read after 97). —c) Ś1 Ñ V1 B D1.4 M4 यथा-; Dg1 च यद्; T2(first time).3 G1.2 M1.2 तु तद् (for त्वहं). G1 उपभोक्ष्यामि तद्दत्तं.

24 D2 om. 24 (cf. v.l. 23). —a) B1 यथाब्रवीत्. Ś1 Ñ V1 B D1.4 M4 सुरलोक-. —b) Ś1 Ñ B D4 विबुधोप- (Ś1 Ñ2 B1 °ध)मो नृपः(D4 °पैः). —c) G1 वरम्; Cr.g as in text (for परम्). Ś1 D1.4 परमात्मसंहितं(D1 °नोहितं). —d) Dg1 Dd1 Dm1 T1.2(both times).3 G1.2 M1-3 अव्ययं; Cr.k.t as in text (for अव्ययम्). Ś1 Ñ V1 B D1.4 M4 न सर्वलोकेश्वरतापि(Ñ2 B1-3 °तां च) सत्कृता (Ñ2 B1.2 °तां; B3 °त).

Colophon. D2 om. (cf. v.l. 23). —*Sarga name*: Ś1 Ñ1 B1.2.4 D4 रामप्रश्नः; Ñ2 B2 श्रीरामप्रश्नः; V1 D1 भरतप्रश्नः. —*Sarga no.* (figures, words or both): Ś1 Ñ1 B1 D4 om.; Ñ2 M2 111; V1 B2 106; B2 98; B4 105; Dg1 Dt1 Dd1 Dm1 T2(first time).3 G2 M3 102; T1.2 (second time) G1.3 M1 104; M4 109. —After colophon, T2 (both times) concludes with श्रीरामचन्द्राय नमः; G with श्रीरामाय नमः.

# ९८

ततः पुरुषसिंहानां वृतानां तैः सुहृद्गणैः ।
शोचतामेव रजनी दुःखेन व्यत्यवर्तत ॥ १
रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः ।
मन्दाकिन्यां हुतं जप्यं कृत्वा राममुपागमन् ॥ २
तूष्णीं ते समुपासीना न कश्चित्किंचिदब्रवीत् ।
भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत् ॥ ३
सान्त्विता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम् ॥ ४
महतेवाम्बुवेगेन भिन्नः सेतुर्जलागमे ।
दुरावारं त्वदन्येन राज्यखण्डमिदं महत् ॥ ५

G. 2. 117. 8
B. 2. 105. 5
L. 2. 0. 0

## 98

☞ V1 missing for st. 1–13 (cf. v.l. 2.96.24). It reads st. 14–21ᵃ after Sarga 98; st. 21ᵇ–56 are lost on missing fol. Ś1 D6 om. 1–13; Ñ B D1.3 M4 constitute a separate Sarga of st. 1–13 and read it after Sarga 100; Dm1 begins with ॐ; M1.2 with श्रीरामाय नमः.

1 Ñ2 om. 1ᵃᵇ. —ᵃ) Ñ1 B1.3.4 तथा; B2 अथो; D1.3 तेषां (for ततः). —ᵇ) D1.7 वृतानां (for °तानां). B2.4 D1.2.4.6.7 सुहृज्जनैः; D2 °द्गुणैः. —ᶜ) Ñ B D1.3 जाग्रताम् (for शोचताम्). G2 M2 रजनीं (for °नी). —ᵈ) G1 व्यत्यवर्तत (for व्य°). Ñ B कल्पं सा तम( B2 °न )वर्तत; D1.3 शुभा समभिवर्तेते( D3 °त ); D2 पुण्या सा व्यवर्तत (sic); D4.7 सुपुण्या सा व्यवर्तत; D5 सा पुण्या व्यत्यवर्तयत्.

2 Ś1 D6 om. 2 (cf. v.l. 1). —ᵃ) Ñ B D2.5 तु प्रभातायां; D6 सुप्रवृत्तायां (for °भातायां). —ᵇ) D2.4 -वृताः (for -वृताः). —ᶜ) G2 M1.2 मंदाकिन्यास् ; Ck.t मंदाकिन्यां( as in text). Ñ B पूर्वां ; D1–4.7 यथा; G2 M1.2 तदे; Cr.m.g.k.t as in text (for हुतं). D1 जप्तं; D1.3 हुत्वं; Ck.t as in text (for जप्यं). —ᵈ) T2 द्वारम् (for रामम्). ⊛ Ct : 'द्वारम्' इति पाठे उटजद्वारमित्यर्थ इति केचित् । तन्न । उपरसर्गे मंदाकिनीतीरे रामसुखाच्चेस्त्युक्तेः । तस्मात् 'रामम्' इति पाठो रामाधिष्ठितनदीतीरमित्यर्थे उचितः । ⊛ Dm1 D1.3 G2 राममुपाविशन् ; D2.5 भूमिमुपाविशन् ; D4.7 भूम उपाविशन्.

3 Ś1 D6 om. 3 (cf. v.l. 1). —ᵃ) Ñ B D2.4.6.7 तूष्णींकाः (for तूष्णीं ते). D2 समुपासन्ना (for °सीना). D1.3 तूष्णीं ते समुपासीने. —ᵇ) Dg1 T2 M2 किंचित्कश्चिद् (by transp.). D2.3 भद्र( D5 °न )चा भाषते तदा; G2 कश्चित्किंचिदमब्रवीत् (sic). —ᶜ) D2.4.5.7 [ ऽ ]थ (for तु). T2 सुहृद्वृतं (for °न्मध्ये). —ᵈ) D2.4.5.6 भ्रातरम् (for वचनम्). Ñ B D1.3 रामं भूयोऽब्रवीद्वचः.

4 Ś1 D6 om. 4 (cf. v.l. 1). —ᵃ) D1 G1.2 सांत्विका; Cm.g.k.t सांत्विता( as in text). Dt1 G1 मामका; D3 मामकी; Cg.k as in text (for °मिका). Ñ B सत्यवादी महाबाहो; D2.4.5.7 सत्यवादी महाराजो. —T2 damaged from त्व in 4ᵃ up to हं in 4ᶜ. —ᵇ) D2.4.5.7 दत्तो (for दत्तं). D1.3 राज्यं दत्तम् (by transp.). Ñ B धन्ये राज्यमदात्पिता. —ᶜ) Ñ1 ददामि; D2 वदामि (for ददामि). D4.7 तथा (for तव). B1 [ च ]हं (sic) (for [ ए ]हं). —ᵈ) D4.7 तव (for भुङ्क्ष्व). D5 राज्यं निहतकंटकं. —After 4, Ñ B D1.3 M4 ins. :

2202* कार्यं प्रसादं कुरु मे शिरसा त्वां प्रसादये ।
न च तद्विदितं पार्थं अनन्या मम यत्कृतम् ।
यथास्मि शिष्यो दासश्च प्रेष्यः प्रेष्यानुगः परः ।
न कार्यं मम राज्येन यत्त्वया नोपभुज्यते ।
त्वद्वानि यदिदं राज्यमपनीतममार्यया । [5]
माता मम गृहाण त्वं तच्चे निर्यातयाम्यहम् ।

[(l. 1) Ñ2 D3 त्वा (for त्वां). D3 प्रसादयेत् (sic). —(l. 2) D1.3 M4 न वै (for न च). D3 विहितं (for विदितं). —(l. 3) B3 दासश्च (sic). Ñ B3 D3 M4 प्रेष्य:( B3 °ष्ठ: ) (for प्रेष्य: ). Ñ2 B2–4 D3 M4 प्रेष्यास्( B4 °स्त, D3 °स्य ) यः परः (for प्रेष्यानुगः परः). D1 प्रेष्यानिवश यः परः (for the post. half). —(l. 4) D1.3 M4 त्वया यत् (by transp.) (for यत्त्वया). Ñ1 B1 [ उ ]पयुज्यते; B2 °भुज्यते (sic); B3 °भुंक्षे; D1.3 °युज्यते (for °भुज्यते). —(l. 5) Ñ2 त्वद्वते; B1 तद्गृहे; B2 (marg.) हृते हि; B4 तद्गृहे; G( ed. )त्वद्धानि( for त्वद्वानि ). D1.3 M4 माता मे मागतं विभो (for the post. half). —(l. 6) D3 माता (for माता). B4 ह्यो (for तचे). M4 मयोनीतमनार्यायास्तदेतत्तातयाम्यहं.]

5 Ś1 D6 om. 5 (cf. v.l. 1). —ᵃ) B4 महता (for महता). B1.4 Dt1 च (for [ इ ]व). Ñ B1.3.4 D1 [ अ ]म्बु; B2 D3 वायु- (for [ अ ]म्बु-). D2.4.5.7 महावातमवेगेन. —ᵇ) B2.3 Dg1 Dt1 D1.3 T2 भिन्न-; Ct as in text (for भिन्नः). Ñ B D1.3 महार्णवे (for जलागमे). D2.4.5.7 भिन्नसेतुरिव (D5 °सेया) प्रभो. —ᶜ) Ñ1 B1–3 D1.3 दुरावरं; Ñ2 °वर्तं; B4 Dm1 °वारं; Dt1 Cv.r.t दुरावारं; T2 दुरावरं; M1 °वरं; Cg as in text (for °वारं). B4 तद् (for त्वद्). D2.5 दुर्धरं स्वात्वदन्येन; D4.7 दुर्धरं स्वात्वदन्येन. —ᵈ) D3 राज्यं (for राज्य-). D2 पित्र्यम् ; D4.5.7 -तंत्रम् (for -खण्डम्). Ñ1 महाराज्यमिदं भुवि (sic); Ñ2 B D1.3 पित्र्यं राज्यमिदं भुवि. —After 5ᵈ, B4 erroneously repeats राज्यमपनीतममार्यया.

G. 2. 117. 9
B. 2. 105. 6
L. 2. 0. 0

गतिं खर इवाश्वस्य तार्क्ष्यस्येव पतत्रिणः ।
अनुगन्तुं न शक्तिर्मे गतिं तव महीपते ॥ ६
सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते ।
राम तेन तु दुर्जीवं यः परानुपजीवति ॥ ७
यथा तु रोपितो वृक्षः पुरुषेण विवर्धितः ।
ह्रस्वकेन दुरारोहो रूढस्कन्धो महाद्रुमः ॥ ८
स यदा पुष्पितो भूत्वा फलानि न विदर्शयेत् ।
स तां नानुभवेत्प्रीतिं यस्य हेतोः प्रभावितः ॥ ९
एषोपमा महाबाहो त्वमर्थं वेत्तुमर्हसि ।
यदि त्वमस्मान्वृषभो भर्ता भृत्यान्न शाधि हि ॥ १०
श्रेणयस्त्वां महाराज पश्यन्त्वग्र्याश्च सर्वशः ।
प्रतपन्तमिवादित्यं राज्ये स्थितमरिंदमम् ॥ ११
तवानुयाने काकुत्स्थ मत्ता नर्दन्तु कुञ्जराः ।
अन्तःपुरगता नार्यो नन्दन्तु सुसमाहिताः ॥ १२

6 Ś1 D6 om. 6 (cf. v.l. 1). —[a]) D2 वर (for खर). —[b]) Ñ1 B1.3.4 सुपर्णस्येव पक्षिणः; Ñ2 B2 D1 सुपर्णस्येव वायसः; D2.4.5.7 गरुडस्येव पक्षिणः (D5 °वान्); D3 सुवर्णस्येव राघव. —[c]) Ñ B D1.3 शक्तोस्मि (for शक्तिर्मे). D2.4.5.7 न चाहमुत्सहे राम. —[d]) Ñ B D1.3 राज्ये (for गतिं). —After 6, Ñ B D1.3 M4 ins.:

2203* पितृपैतामहं राज्यं त्वंचाहमुपाहरन् ।
नैतद्रोचयते मह्यं पारक्यमिव भूषणम् ।
अभिषिक्तस्त्वमर्यैव विधिवत्पार्थिवात्मज ।
सहास्माभिरतिस्निग्धैर्भुङ्क्ष्व राज्यमकण्टकम् ।

[(l. 1) B2 तदेव (for °चैव). D1 व्याहरं (for °हरन्). D3 त्वैवाहंमपारकं; M4 तत्र नाहमपाहरं (for the post. half). —(l. 2) Ñ1 B2.3 [प]ज (for [प]तद्). D1.3 विरोचते (for रोचयते). Ñ1 मन्वां (sic); Ñ2 B1 [ऽ]स्मन्; M4 [ऽ]स्माकं (for मह्यं). B4 पारक्यमवृषणं (subm.) (for the post. half). —(l. 3) D1 तु यंव (sic); D3 ममार्यैव (sic) (for त्वमर्यैव). B4 अभिषिक्तस्त्व मद्य (अत्र) त्व (for the prior half). Ñ1 B2 पार्थिवात्मजः (for °त्मज). —(l. 4) M4 अति (for अति-). Ñ2 B2 -स्निग्धो (for °स्नैः). D3 महास्माभि॰॰स्निग्धैर् (for the prior half).]

7 Ś1 D6 om. 7 (cf. v.l. 1). —[a]) Ñ B2.4 सजीवं; D1 सुजीव्यं. Ñ B D1 नित्यशस्तेन; T3 °शश्च (for °शस्तस्य). D1.2 सुजीव्यं जीवितं तस्य; D4.5.7 सुजीव्यं तेन सर्वत्र. —[c]) Ñ B1.2.4 वीर तेन; B2 जीवितेन; Dg1 Dd1 Dm1 T2 G3 राम तस्य; C1.k.t as in text (for राम तेन). Ñ1 तद्; B4 * (for तु). Ñ1 रावांत्र (sic); Ñ2 स्वजीते (sic); D4 दुर्जीव्यं; T2 M3 Ck दुर्जीवो (for °वं). D1 जीवत्यपि सुदुर्जीवो; D2.3 दुर्जीव्यं जीवितं (D3 °वनं) तस्य; D6 राम तेन सुदुर्जीव्यं. —[d]) D7 दुपजीव्यति (for °जीवति).

8 Ś1 D6 om. 8 (cf. v.l. 1). Ñ1 om. 8[ab]. —[a]) B1.2.4 यदा (for यथा). D1.3 च; D2.5.5.7 हि (for तु). G1 Ck [आ]रोपितो; Cv.g.t रोपितः (as in text). —[b]) Ñ2 B1.4 [इ]ह वधतः; B1.2 फलार्थिना; D1.3 [इ]ह केनचित्; D2 [इ]ह भावितः; D4.7 [इ]ह वर्धितः; D5 [प]त्र भावितः (for विवर्धितः). —[cd]) D4.7 ह्रस्वको तु; D6 महस्वको (for ह्रस्वकेन). D2.4.5.7 दुरारूपो (for °रोहो). Ñ B D1.3 ह्रस्वको

(B1.4 कमुको) धर्मणीयः स्यादि (B2 °श्र)वृक्षः सुदु (D1.3 स्यादु)रारुहः.

9 Ś1 D6 om. 9 (cf. v.l. 1). —[a]) Ñ B यदा तु (Ñ2 °पि); D4.6.7 T1.2 M4 Cv.m.g स यथा; Ck.t स यदा (as in text). —[b]) D1–3.5 न फलानि प्रदर्शयेत्. —[c]) D3 सदा (for स तां). G3 प्रीतिर् (sic) (for °तिं). D2.4.5.7 स तां नैवाहरे (D5 °रुहे)त्प्रीतिं. —[d]) B4 हेतुः (for हेतोः). Ñ B1–3 Dg1 D11 Dd1 Dm1 D2.4.5.7 प्ररोपितः; B4 प्रभावितः (sic); D1.3 T2 G3 स रोपितः; Cg.k.t as in text (for प्रभावितः).

10 Ś1 D6 om. 10 (cf. v.l. 1). —[a]) D3 एषो मम (sic) (for °पमा). Ñ B D1.3 मया प्रोक्ता (for महाबाहो). —[b]) Ñ B D1 तां त्वमेवं; Dg1 D11 Dd1 Dm1 T1.2 G1 M2.3 Cv.r.m.g.t तम (D11 Dd1 Ct °द)र्थं (for त्वमर्थं°). Cv अर्हति. D2.3.5 तां त्वं; D2 तु; वेत्तुमिहार्हसि; D4 पश्यत्वमांश्च सर्वशः; D7 न तां ह्यनुमिहार्हसि. —D4 om. 10[c]–11[b]; Ñ B om. 10[cd]. —[cd]) Dg1 D11 Dd1 Dm1 T2 G2 M1–3 Ct यदा; D2 यत्; Cr.m.g यदि (as in text). D2 त्वमसि; M2 त्वमस्माद् (sic) (for त्वमस्मान्). D3 यस्त्वमस्माकमृषभो; D7 यतस्त्वमस्मान्नृपते (for °). Dg1 कर्ता भर्ता सुशासिता; Dd1 Dm1 भृत्यास्त्वतां न शाधि हि; D2.7 भ्राता भ्रातृ (D5 °तु) पोषकः; Cm.g as in text (for [d]). D1.3 स त्वं कुलगुरुं गुर्वीं धुर्यवहोढुमर्हसि.

11 Ś1 D6 om. 11 (cf. v.l. 1). D4 om. 11[ab] (cf. v.l. 10). —[a]) D2.5.7 महाबाहो (for °राज). —[b]) Ñ1 B2.4 [आ]योध्य; D2.5.7 [अ]ग्राश्च; D3 [अ]ग्र्याः; G2 [अ]ग्राश्च; M3 [अ]त्याश्च; Cr.m.g.t as in text (for °ग्र्याश्च). D4 om. 11[c]–12[b]. —[c]) B2 G2 प्रतपंतम् (meta.) (for प्रतपन्तम्). —[d]) Ñ B2 Dg1 D11 D2.7 T1 M2.3 राज्य- (for राज्ये). B D1 अरिंदम.

12 Ś1 D6 om. 12 (cf. v.l. 1). D6 om. 12[ab] (cf. v.l. 11). —[a]) D11 G1.3 तथा (for तव). G3 [अ]नु योगात् (for °याने). —[b]) Ñ B2.3 गर्जंतु (B2 °ति); B1.4 गच्छंतु; Dd1 चाहंतु (sic) (for नर्दन्तु). B2–4 वारणाः (for कुञ्जराः). D1 पूर्वां गच्छंतु कुंजराः; D5 सर्वे कुर्वंतु कुंजराः (sic); D6 कूजंतो यांतु कुंजराः; D4.7 कूजाः (D7 °न्ताः (sic)) कर्षंति कुंजराः. —[c]) B3 Dd1 Dm1 D2 अंतःपुरचराः D3

तस्य साध्विस्यमन्यन्त नागरा विविधा जनाः ।
भरतस्य वचः श्रुत्वा रामं प्रत्यनुयाचतः ॥ १३
तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम् ।
रामः कृतात्मा भरतं समाश्वासयदात्मवान् ॥ १४
नात्मनः कामकारोऽस्ति पुरुषोऽयमनीश्वरः ।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥ १५
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ १६

G. 2. 114. 3
B. 2. 105. 16
L. 2. 119. 5

°तः—°रा. —d ) Ñ B तांतु वैतालिकाश्च ते( B1.2 वै ); D1.3 तांतु वैमाविकं तथा; D2 तांतु वैनयकं तव ( sic ); D4.7 तांतु वैबाधिकं च तेः D6 त्वां नु वै भावयंनु च. —After 12, Ñ B D1.3 M4 ins. :

2204* तव बहुधा वयं सर्वे त्वं नो राजा परंतप ।
किमर्थं वा त्वजस्यस्मान्किं वास्माभिः कृतं तव ।
यदि मात्रा कृतं पापं प्रोषिते मयि राघव ।
मम कोऽपराधोऽस्ति स्वयं तावद्विमृश्यताम् ।
यत्र शक्यं चाभ्यतिनुमप्रष्टव्यं यदुच्यते । [5]
यस्मा लोकाद्धयो बहवान्दैवमपराध्यति ।
जनोऽयं नागरः सर्वो भूयिष्ठं शुश्रमागतः ।
नेतुं हि त्वामितो नाथ साधु याचकृतस्य मे ।
ज्ञातीनां बान्धवानां च भ्रातॄणां सुहृदां तथा ।
पौराणां च द्विजानां च हृदयं साधु नन्दय । [10]
साधु त्वं मा शुचः शोच्य लोकनाथ सुदुःखितम् ।
पित्रा शून्यमधिष्ठानं पाहि पालयतां वर ।

[ (l. 1) Ñ1 D3 परतपः. —(l. 2) D5 च ( for वा ). B1 वाभ्यजसि ( sic ); B4 वा त्वज्माभिः ( sic ) ( for °स्त्वजस्यस्मान् ). Ñ2 किमर्थं त्यजसस्मान् ( sic ); M4 तत्किमर्थं त्वजस्यान् ( for the prior half ). B1.2 D3 किं वास्माभिः; G( ed. ) किमस्माभिः ( for किं वास्माभिः ). —(l. 4) D3 तात ( for तावद् ). —(l. 5) B4 ननु शक्यं ( for यत्र शक्यं ). M4 चलमितुम्, D3 नायुष्यं ( for °ष्टव्यं ). —(l. 6) B3 मेस्य ( for लोकाद् ). Ñ1 तदेवम्; B3 तं देवम्; B4 तदैवम् ( for तदैवम् ). D1.3 M4 दैवमपराध्यते( D3 °ति ) ( for the post. half ). —(l. 7) G( ed. )भूयिष्ठं ( for भूयिष्ठं ). Ñ2 D1.3 M4 वनमागतः ( for शुश्र° ). —After l. 7, D1 ins. :

2204(A)* त्वद्वियोगादनुरक्तश्च सर्वोऽयं नागरो जनः ।
स्वर्गोपत्येषु शूरातश्च त्वामेव गतमानसः ।

[ (l. 1) D3 अनुरक्तस्य स्वर्गो-. ]

—(l. 8) B2.3 दर्श ( sic ) ( for त्वां ). D1.3 M4 त्वामितो नवितुं ( D1 °तो ) राजन् ( for the prior half ). D3 स त्व ( for साधु ). Ñ M4 यास्यं; B2–4 D3 याचा( B2 °चाः ) ( for याहक ). M4 यद ( for मे ). —(l. 9) B4 D3 सुहृत( D3 °दां )स ( for °दां ). D1 तदा ( for °था ). —(l. 10) M4 वै ( for first च ). B4 सुहृदां; M4 लोकं ( for हृदयं ). Ñ2 B1.4 नंदय ( for नन्दय ). —(l. 11) D1.3 शोच( D1 °चा )त्व मां ( for त्वं मा शुचः ). M4 साधु शोचास मा शोचो ( for the prior half ). B2–4 D1.3 लोकनाथ ( for °नाथं ). M4 सुदुःखितः ( for °तम् ). —(l. 12) B4 D3 अधिष्ठानं ( sic ). M4 याहि ( for पाहि ). ]

13 Ś1 D4 om. 13 ( cf. v.l. 1 ). —ab ) D11 Dd1 Dm1 Ct [ अ ]नुमन्यत; G1 M4 [ अ ]न्व° ( for [ इ ]त्य° ). D2.4.7 तत्र सर्वाभिसंचरण नाना( D3 न नो [ sic ] )देश्या नराधिपाः; D5 संहृष्टाः सत्यसंचल नानादेशाश्रराधिपाः. —c ) D3 G2 रामः; G1 कामं ( for रामं ). D1.3 -याचतः( D2 °नः ) ( for -याचतः ). —After 13, Dm1 ins. राम. —For 13, Ñ B D1.3 M4 subst., and Ñ B M4 read after 14 :

2205* एवं तस्य वचः श्रुत्वा नागरा बहुधा जनाः ।
मेनिरे ते तदा सर्वे प्रसादं नः करिष्यति ।

Colophon.

[ (l. 1) D1.3 M4 भरतस्य ( for एवं तस्य ). D1 M4 विविधा; D3 om. ( for बहुधा ). M4 नराः ( for जनाः ). —(l. 2) G( ed. ) ते ( for तं ). M4 अचिन्तयंश ( for मेनिरे ते ). Ñ2 B4 D1.3 M4 न ( for नः ). —Colophon. Ñ B1 om. —*Sarga name* : B2.4 D1.3 भरतयाचनं; B3 नागरिकसत्यवचनं. —*Sarga no.* ( figures, words or both ) : D3 om.; B2 103; B3 M4 116; B4 112; D1 168. ]

14 V1 resumes ( cf. v.l. 1 ). —a ) G3 तद् ( for तम् ). B2.3 D4 G2.3 M1–3 एवं; Cg as in text ( for °वं ). —b ) D2.4.5.7 तथाविधं ( for यश° ). —cd ) B3 रामः. B4 कृतार्थो ( for °त्मा ). B3 भरतः. Ñ B प्रत्याश्वासयद् ( for समा° ). D2.4.5.7 रामो धर्मभृतां श्रेष्ठो भरतं वाक्यमब्रवीत्. —For 14, Ś1 V1 D1.3.4 subst.; Ñ B M4 ins. before 15 and all read after 71 :

2206* स तथा भरतेनोक्तो रामो धर्मपथे स्थितः ।
इदं वचनमक्लीबं मध्ये परिषदोऽब्रवीत् ।

[ (l. 1) D1 -पथि ( sic ) ( for -पथे ). D3 M4 धर्मभृतां वरः. ]

15 Ś1 Ñ V1 B D1.3.4 M4 read from 15 ( preceded by 2206* ) up to 43 ( V1 missing 21b onwards [ cf. v.l. 21 ] ) after 71 and constitute a separate Sarga. —D2.4.5.7 om. 15. —a ) B1 illeg. for नात्मनः. D11 कामकारा हि; Ck.t as in text for °कारोऽस्ति. —c ) Ś1 D4 [ इ ]तश्चापरतः; V1 D1.3 °श्च विहितं; B1–3 °श्च भरतः; M3 °रतंत्येन (sic) ( for °रतश्चैनं ). Ñ1 भरतश्चेतरश्चैनं; Ñ2 इतश्चेतरश्च भरतः; B4 G3 इतरश्चेतरश्चैनं( G3 °न [ damaged ] ); M4 इतरश्चेतरश्चैनं. —d ) G3 damaged for कृतान्तः.

16 For sequence in Ś1 Ñ V1 B D1.3.4 M4, cf. v.l. 15. = Mbh. 12.27.29. —a ) Ñ1 illeg. for सर्वे क्षयान्ता. —b ) B3 समुच्छ्रयाः; D3 समूच्छ्रयाः ( sic ). M3 पतनांतः समुच्छ्रयः. —c ) B1 संयोगाश्च वियोगांताः; B2 संयोगाश्च वियोगान्ताः. —After 16, M4 ins. :

G. 2. 114. 4
B. 2. 105. 17
L. 2. 119. 4

यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ १७
यथागारं दृढस्थूणं जीर्णं भूत्वावसीदति ।
तथावसीदन्ति नरा जरामृत्युवशं गताः ॥ १८
अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ १९
आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।
आयुस्ते हीयते यस्य स्थितस्य च गतस्य च ॥ २०
सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति ।
गत्वा सुदीर्घमध्वानं सह मृत्युर्निवर्तते ॥ २१
गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ।
जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ॥ २२
नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते रवौ ।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥ २३

---

2207* उपैति रजनी चैषा न संप्रति निवर्तते ।
गतेव सरिदापूर्णा समुद्रमुदकार्णवम् ।

17 For sequence in Ś1 Ñ V1 B D1.3.4, cf. v.l. 15. M4 om. 17–24ᵇ. —ᵃ) M2 पंचानां (for पक्वानां). —ᵇ) D3 कालेन (for नान्यत्र). —D7 om. (hapl.) 17ᶜᵈ. —ᶜ) Ś1 D2.4–6 तथा (for एवं). Ś1 Ñ V1 B D1–4 नराणां जातानां (for नरस्य जातस्य). —ᵈ) G3 damaged for मरणाद्भयम्. B4 पतनाद् (for मरणाद्).

18 For sequence in Ś1 Ñ V1 B D1.3.4, cf. v.l. 15. M4 om. 18 (cf. v.l. 17). —ᵃ) Ś1 Ñ1 V1 B1 Dm1 D4.6.7 दृढं; D5 बृहत्- (for दृढ-). Ś1 Ñ V1 D4.6.7 स्थूलं; Ñ1 (also) भूत्वा (for -स्थूणं). B4 यथा गारं दृढस्थानं. —ᵇ) Ś1 D5 शीर्णं (for जीर्णं). D2.4.6.7 तद्; M2 भुक्त्वा (sic) (for भूत्वा). V1 D1.3 च सीदति; B2 विषीदति; Dt1 T1 [ऽ]वसी°; M2 न सी° (for [ऽ]वसीदति). —ᶜ) D3 तत्र; M2 यथा (for तथा). Ś1 Ñ2 D5 T1.3 [ए]व सीदंति; V1 D3.4 च सीदंति; B2 विषीदंति (for [ऽ]वसी°). G1 जना (for नरा). —ᵈ) Ś1 Ñ V1 B D1–7 मृत्युपाश- (for जरामृत्यु-). —After 18, Ś1 Ñ2 B D5 read 21, whereas Dg1 Dt1 Dd1 Dm1 T G M1–3 ins.:

2208* अत्येति रजनी या तु सा न प्रतिनिवर्तते ।
यात्येव यमुना पूर्णा समुद्रमुदकार्णवम् ।

[cf. 2207*. (l. 1) G1.2 M2 अत्ये(G2 °न्ते)तु; Cm.g अत्येति (as above). —(l. 2) Dt1 पूर्णे (for पूर्णा). Dg1 T G2 M1.2 लवणार्णवं; Cv.m.k.t उदकार्णवं (as above); Cg उदकाकुले.];

while D1.3 ins. after 18:

2209* गच्छन्ति सरितः पूर्णाः समुद्रं सरितां पतिम् ।

19 For sequence in Ś1 Ñ B D1.3.4, cf. v.l. 15. M4 om. 19 (cf. v.l. 17); V1 D2.4.6.7 om. 19–20. —ᵃ) Ś1 Ñ B D1.3.4 वर्तंते (for गच्छन्ति). —ᵇ) Ñ1 इतः (for इह). —ᶜ) Ś1 D5 कर्षयंति; B1 क्षपयित्वा (for क्षपयन्ति). D1.3 [ए]व (for [आ]शु). Ñ1 यथास्थिनं तपंत्याशु. —ᵈ) Dm1 [ओ]शव (sic); D1.3 °अशी; Cr.m.g.t as in text; Ck.tp [आ]शवे (for [अं]शवः). G2 ग्रीष्मेरिव जलांशवः; G3 ग्रीष्मे कुलरि* ** (damaged).

20 For sequence in Ś1 Ñ B D1.3.4, cf. v.l. 15. V1 D2.4.6.7 M4 om. 20 (for M4 cf. v.l. 17 and for the rest 19). —ᵃ) G3 damaged for आत्मानं. Dm1 T2 M3 अनुशोचस्व; D1.3 G2 M1.2 °शोचस्व; Cm.k.t as in text (for अनुशोच त्वं). —ᵇ) Ś1 D1.3.4 अन्यद् (for अन्यम्). —ᶜ) Dt1 Dd1 G2 M1 Ck.t तु; D5 तद्; Cg as in text (for ते). Ś1 Ñ B D5 क्षीय(B4 °यं)ते; Dt1 हीयते; Cg.t as in text (for हीयते). B2 यस्मिन्; B4 यस्मात् (for यस्य). —ᵈ) T1 damaged; M2 [आ]स्थितस्य (for स्थितस्य). T2 G M1.2 [अ]पि (G2 °प.) (for first च). Ś1 D5 भवतस्तथा; Ñ B D1.3 चरतस्तथा; Dt1 [अ]प्यागतस्य च (for च गतस्य च).

21 For sequence in Ś1 Ñ2 V1 B D1.3.4, cf. v.l. 15. Ś1 Ñ2 B D5 read 21 after 18. M4 om. 21 (cf. v.l. 17).

☞ V1 lost from 21ᵃ–56 on missing fol. Ñ1 om. 21. —ᵃ) V1 सदैव (for सहैव). B3 वसति (for व्रजति). —M2 om. (hapl.) 21ᵇᶜ. —ᵇ) Ś1 Ñ2 B D5 च तिष्ठति; D1.3 प्रयाति; D2.4.6.7 उपास्ते (for निषीदति). —ᶜ) Ś1 Ñ2 B D1–7 सु(Ñ2 नु)दूरम्(B2 gloss यमलोके); Dd1 स दीर्घम्; G1 तु शीघ्रम्; G2.3 M1 तु दीर्घम् (for सुदीर्घम्). —ᵈ) D2.4.7 न हि (for सह).

22 For sequence in Ś1 Ñ B D1.3.4, cf. v.l. 15. M4 om. 22 (cf. v.l. 17); D2.4.6.7 om. 22–30. —ᵃ) D1.3 गात्रे ते. Ś1 प्रलयः (sic) (for वलयः). T1 damaged for प्राप्ताः. —ᵇ) D1.3 जाताः श्वेताः. —ᶜ) Ś1 D5 कीर्णः (for जीर्णः). —ᵈ) Ś1 D5 हित्वेह; D1.3 तु कृत्वा (for हि कृत्वा). Ś1 Ñ B D1.3.4 सुखी भवेत्; G1 न भावयेत् (for प्रभावयेत्).

23 For sequence in Ś1 Ñ B D1.3.4, cf. v.l. 15. D2.4.6.7 M4 om. 23 (for M4 cf. v.l. 17 and for the rest 22). —ᵃ) Ś1 D5 इमे च; Ñ B इमे (Ñ2 °दं; B3 also लोके) च (for नन्दन्ति). —ᵇ) Ś1 D5 तथैव; Ñ B तथा हि (for नन्दन्ति). Ś1 D5 त्विह; Ñ B Dt1 M2 [ऽ]इति; Dd1 Dm1 D1.3 [ऽ]पि च (for रवौ). —ᶜ) B4 नाभिबुध्यंते; D1.3 नैव बुध्यंते; G3 नैव जानंति (for नावबुध्यन्ते). —ᵈ) Ś1 Ñ B D5 पुरुषा (for मनुष्या).

हृष्यन्त्यृतुमुखं दृष्ट्वा नवं नवमिहागतम् ।
ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥ २४
यथा काष्ठं च काष्ठं च समेयातां महार्णवे ।
समेत्य च व्यपेयातां कालमासाद्य कंचन ॥ २५
एवं भार्याश्च पुत्राश्च ज्ञातयश्च वसूनि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥ २६
नात्र कश्चिद्यथाभावं प्राणी समभिवर्तते ।
तेन तस्मिन्न सामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥ २७
यथा हि सार्थं गच्छन्तं ब्रूयात्कश्चित्पथि स्थितः ।
अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥ २८
एवं पूर्वैर्गतो मार्गः पितृपैतामहो ध्रुवः ।
तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥ २९
वयसः पतमानस्य स्रोतसो वानिवर्तिनः ।
आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥ ३०

G. 2. 114. 17
B. 2. 105. 31
L. 2. 119. 17

---

24 For sequence in Ś1 Ñ B D1.2.6, cf. v.l. 15. D2.4.5.7 om. 24; M4 om. 24ab (for M4, cf. v.l. 17 and for the rest 22). —a) Ś1 D6 हृष्यति; G2 हृष्यन् (for °न्ति). Ś1 D6 ह्रुकाले; Ñ B2-4 ऋतुकाले(Ñ1 °वनं); G2 ऋतुमुखं; Cm.t as in text; Ck.tp [आ]रुम° (for ऋतुमुखं). B1 दृष्ट्वा प्रसूनं हृष्यंति; B2 (m. also) हृष्यन्मृत्युरुकं दृष्ट्वा. D1.3 हृष्यंत्यत्र सुखं दृष्ट्वा. —b) B2 (m. also नरं नरम्) वनं वनम्; T2.3 वनं (T3 °रं) नवम् (for नवं नवम्). Ñ2 B1.2.4 Dg1 Dt1 Dd1 Dm1 G M1.2 Ck.t इव (for इह). D1 वनं स समुपागतः; D3 वसंतं समुपागतं. —c) Ś1 ऋतवः. Ś1 D6 परिवर्तते (for °वर्तेन). —d) B4 प्राणिनः (for °नां). Ś1 Ñ1 B4 D6 -संक्षये; B3 (also) -संज्ञव: (for -संक्षयः).

25 For sequence in Ś1 Ñ B D1.2.6 M4, cf. v.l. 15. = Mbh 12.28.36. D2.4.5.7 om. 25 (cf. v.l. 22). —a) T3 समेईयातां (for समेयातां). Ś1 Ñ B D1.2.6 T1 M4 महोदधौ. —c) Dt1 T1 G1 तु (for च). D3 माता पिता च पुत्राणां. —d) Ś1 Ñ B D6 स्थित्वा किंचित्प्रणोतरं; D1.6 M4 तद्वद्भूतसमागमः.

26 For sequence in Ś1 Ñ B D1.2.6 M4, cf. v.l. 15. D2.4.5.7 om. 26 (cf. v.l. 22). —a) B2 भोगाश्च; B4 पुत्रश्च (for पुत्राश्च). —b) Ś1 Ñ B D6 सुहृदश्च (for ज्ञातयश्च). T धनानि (for वसूनि). —c) Ś1 Ñ2 B2.3 D6 व्यवधीयंते; Ñ1 damaged; B1 gloss (व्यवधानं नाशं); D1.2 प्रतिनश्यंति; M4 °धावंतो (for °धावन्ति). —d) Dg1 (ध्रु)वो (for °वां). D1.2 M4 पराभवः. Ś1 Ñ D6 ध्रुवं तेषां पराभवः; B ध्रुवस्ते(B1 also °वं ते)षां पराभवः. —After 26, Dm1 ins. हाम.

27 For sequence in Ś1 Ñ B D1.2.6 M4, cf. v.l. 15. D2.4.5.7 om. 27 (cf. v.l. 22). —a) Ś1 Ñ B D1.2.6 M4 न कश्चिदन्यथाभावं(Ñ1 illeg. for थाभावं; B2 [in marg. gloss अन्यथाभावं मृत्युं]). —b) D1 प्राणान्; G2 प्राणिस् (sic) (for प्राणी). Ñ D11 Ck.t समतिवर्तते; Cv.r.m.g समभिवर्तते (as in text). Ś1 D6 प्राणानामतिवर्तते. —c) Ś1 Ñ B D1.2.6 M4 नास्तीह (for तस्मिन्न). G1 (also) तेनास्मसरणे नास्ति. —d) Ñ1 प्रेतेषा (sic) (for प्रेतस्य). Ś1 Ñ1 B2.4 D6 हि; Ñ2 च; B1.2 हि; D1.3 वा; G1 [अ]स्य; G2 तु (for [अ]स्ति). Ñ1 D1.2 [अ]नुशोचने(Ñ1 °ते); M4 ननु शोचने.

28 For sequence in Ś1 Ñ B D1.2.6 M4, cf. v.l. 15. D2.4.5.7 om. 28 (cf. v.l. 22). —a) Cr यथा हि. Ś1 Dg1 D6 Cr सार्थः; Ñ2 पान्थः; Cm.g.t as in text; Ck सार्थौ (for सार्थं). —b) Ś1 B1 T2 कि(B1 कश्च)त्पथ्ये(T2 °थि). G1 स्थिरं (for स्थितः). —c) T2 अस्य (for अपि). Ś1 Ñ B D1.2.6 M4 [अ]नुया(D2 °या [sic])स्यामि (for [आ]गमिष्यामि). Ś1 इह; G1 मह (for इति).

29 For sequence in Ś1 Ñ B D1.2.6 M4, cf. v.l. 15. D2.4.5.7 om. 29 (cf. v.l. 22). —a) T3 Ck मार्गं (for मार्गः). Ś1 D6 यैः(D6 by corr. यः) पूर्वैः प्राक्(D6 °क्तं)तो मार्गः; Ñ B M4 यः पूर्वं(Ñ1 °र्वैः; B2.4 °र्वैः)प्र(Ñ2 B2.4 प्रा)कृतो मार्गः; D1.2 यस्तु पूर्वैः(D2 °र्वै) कृतो मार्गः. —b) Dg1 Dt1 M2 पितृपैतामहैर्; Dd1 पैतृपितामहो; B(ed.) Ck.t पैतृपितामहैर्; Cv.r.g.tp as in text (for पितृपैतामहो). Ñ2 Ck ध्रुवं. —M4 om. from 29c up to 30b. —c) D1.2 त्यजेद्य (for शोचेद्). —d) Dm1 यस्मिन्; D1.2 तस्य (for यस्य).

30 For sequence in Ś1 Ñ B D1.2.6 M4, cf. v.l. 15. D2.4.5.7 om. 30 (cf. v.l. 22); M4 om. 30ab (cf. v.l. 29). —a) Ñ2 Dm1 G2 वयसा; B1.4 पयसः; Cm वयसः (as in text). Ś1 Ñ2 B1.2.4 D6 प्लवमानस्य; Ñ1 B2 प्रवमाण(B2 °न)स्य; Dm1 वतमानस्य; D1.2 च प्रमाणश्च (for पतमानस्य). —b) Ñ1 स्रोकसो (sic). B4 न; D1.2 [अ]स्य (for वा). B4 [अ]निवर्तिनः; D1.2 [अ]निक(D2 °च)र्तिनः; T3 [अ]निवर्तिनः; Ck.t as in text (for [अ]निवर्तिनः). Ñ2 B2 स्रोतसेवानिवर्तिना. —c) M4 सदा (for आत्मा). Ś1 Ñ1 B1.2.4 D6 धर्मे. G2 संधे (for सुखे). Ś1 Ñ1 B1.2 D6 [ऽ]भि-; Dg1 D2 T2 M4 न; Cg as in text (for नि-). B1 -योज्यो हि (for -योक्तव्यः). Ñ2 आत्मा धर्मेण योक्तव्यो; B2 आत्मधर्मे नि°. —d) Ñ1 सुखोत्थाः; Ñ2 B धर्मे यो(Ñ2 भाः; B2 भो)ज्याः(B4 °ज्या: [sic]) (for सुखभाजः). Dt1 om.; Cv.r.m.g.t as in text (for प्रजाः). Ś1 D6 धर्मेण विपश्चिता; M4 सुखभाजः प्रजास्त्विमाः.

